सम्पादकः—

श्रीपण्डितयुधिष्ठिरमीमांसकः

व्याकरण-शास्त्र का इतिहास, ऋग्वेद की ऋक्संख्या
ग्रन्थानां लेखकः, दशपाद्युणादिवृत्तिः, वाररुचनिरुक्तस
भागवृत्तिसंकलनम् आदिग्रन्थानां सम्पादकः)

सहयोगी—

इतरामशङ्करभट्टाचार्यः, व्याकरणाचार्यः एम. ए. क




मुद्रक—

त्र्व से प्राचीन वृत्ति है। यह सर्व प्रथम सन् १८३० ई॰
र् लिबिश द्वारा रोमन अक्षरों में जर्मन भाषा में लि
ाहित छपी थी। इस पर पं० युधिष्ठिर मीमांसक ने
ा और कई योग्य व्यक्तियों को इस कार्य के लिए प्रेरणा
नेक कारणों से सफल न हो पाई। अन्त में उन्होंने स्वः
ठ न रहने पर भी और बहुत सी प्रतिकूलताएँ होते हुए
ा सम्पादन बहुत सफलता और योग्यता पूर्वक किया है
दकीय वक्तव्य, तथा ग्रन्थ में लिखी विद्वत्ता पूर्ण टिप्पा

ने को यह व्याकरण का एक छोटा सा ग्रन्थ धातुपाठ
ही प्रतीत होता है। पर गहरी दृष्टि से देखा जाये तो
तना प्रकाश आज तक किसी विदेशी या स्वदेशी वि॰
ा है। इसकी गहराई को कृतभूरि परिश्रम विद्वान् ही र
मेरा मत है। विद्वान् इनकी सब मान्यताओं के साथ स
भी यह कार्य बहुत ही उत्कृष्ट कोटि का हुआ है।
रामलाल कपूर ट्रस्ट अमृतसर के संचालकों ने ऐसे ग्रन्
। कर भारतीय प्राचीन साहित्य की महती सेवा की है
रा में महान् कार्य कर रहा है। ट्रस्ट ने इस ग्रन्थ के
दूरी पर छापने आदि में भारी कष्ट सहन किया है।
पं० युधिष्ठिर जी को धन्यवाद देता हूँ जो इन्होंने
ट्रस्ट की ओर से किया। उनके सहायक पं० राम
ा करणाचार्य एम. ए. को भी उनकी सहायता के
ता हूं।
को शीघ्र प्रकाशित करने का श्रेय श्री बा० हंसराज

चनं विना काश्चिदप्याचार्यः शब्दानुशा...

त एव पाणिनेरौत्तरकालिकाः कातन्त्र-चान्द्र-जैने
हैमप्रभृतिशब्दानुशासनानां सर्वे एव प्रवक्तारः स्वं
ोचुः । पाणिनेः पौर्वकालिकैः सर्वैः शब्दशास्त्र-प्रवक्
प्रवचनं कृतं नवेत्यत्र यद्यपि न शक्यते याथातथ्येन व
णिनेः प्राचीनस्यापिशलेर्बहवो धातवो यत्र तत्र श्र
, तेन तस्य धातुपाठप्रवक्तृत्वं स्पष्टमेव । ततोऽपि प्रा
ाशकृत्स्नस्य सम्पूर्णो धातुपाठश्चन्नवीरकविकृतया ट
नाथीकृत एषु पञ्चषेषु वर्षेषु प्रकाशतामुपगतः । एवं
। यानि मतानि ग्रन्थेषूपलभ्यन्ते तेष्वनेकधातूनां
प्रोक्तो धातुपाठोऽप्यासीदिति संभाव्यते । सर्वनाम्नां
ादकस्य वैयाकरणमूर्धन्यस्य शाकटायनस्य धा
ाठैव नोदेति । एवं पाणिनेरुत्तरवर्तिनां पूर्ववर्तिनां च
क्तृणां तत्तद्धातुपाठस्य प्रवक्तृत्वे[3] निश्चिते शक्यत
गवता पाणिनिनाऽपि शब्दानुशासनं प्रवचता धा
वचनमवश्यं कृतं स्यात् ।

## पाणिनेर्धातुपाठः

ं धातुपाठं पाणिनीया वैयाकरणा आद्रियन्ते स
ाणिनि-प्रोक्त इति समेषां पाणिनीयानां मतम् ।

---

१. सकारमात्रमस्तिं धातुमापिशलिराचार्यः प्रतिजानीते । न्यास
। एवमन्यत्रापि (न्यास पृ० ६६८, ६६६, ७०१) द्रष्टव्यम् ।
धातू, व्याकरणस्य शाखान्तरे आपिशलादौ स्मरणात् । स्क
ग २ पृष्ठ २२ ॥ [तु] छान्दसोऽयमित्यापिशलिः । धातुप्रदीप पृ

प्रतिपादितं हि पूर्वं[1] गणकारः[2] पाणिनिर्न भवतीति । तथ
च सूत्रकारः । न्यास भाग २ पृष्ठ ८४० ।
–यद्यत्र त्रिग्रहणं क्रियेत निजादीनामन्ते वृत्करणं किमर्थम्
न्यः, न सूत्रकारः अन्यो हि गणकारोऽन्यश्च सूत्रकार इत्युव
ा २ पृष्ठ ८७३ ।

सकारस्य स्ववचनविरोधः—धातुपाठस्यापाणि
; न्यासकारस्य द्वे वचने पुरस्तादुद्धृते । परमेकत्र
ाठमालोचयन्नयं न्यासकारः 'किञ्चिद् धातुगणं पाणि
तेपेदे । तथा चाह—
तस्य पाणिनिरिव असु भुवि इति गणपाठः । न्यास भाग

नेन स्ववचनविरोधेन निग्रहस्थाने निपतितस्य न्यास
त्वमतं कथंकारं प्रमाणतां भजेत् ।

ासकारस्य भ्रान्तिः—अपि चास्मन्मते न्यासकार
ाणिनीयत्वप्रतिपादकौ हेतू हेत्वाभासावेव । नहि
रः प्रोक्तकृतयोर्ग्रन्थयोरन्तरं वेत्ति इत्यपि तदीयपु
ा विज्ञायते । स हि खलु अष्टाध्यायी धातुपाठश्च प
न्थाविव्यास्यायालोचयांचकार । यदि हि नाम के

---

० शास्त्र का इतिहास' ग्रन्थस्य द्वितीयभागे द्रष्टव्यम् (अचि
ति) ।

१. नहि क्वचित् पूर्वं न्यासे धातुगणकारस्यान्यत्वप्रतिपादकं

वभिप्रेतौ। न च पाणिनिना क्वचिदप्यष्टाध्याय्यां ङिङ्संज्ञा विधीयते।

आङि चापः, आङो नाऽस्त्रियाम् (अ० ७।३।१०५, १२०) न तृतीयैकवचनं टा निर्दिश्यते। न च क्वचित् पा ाङ्संकेतः प्रतिज्ञातः।

यमन्यत्रापि द्रष्टव्यम्। सति चैवं विरोधेऽष्टाध्याय्य त्वं दूरेऽपाकृतं स्यात्। यदि हि नाम पूर्वसूत्र[2]-निर्दे ाय्यां विरोधपरिहारः कर्तुं शक्यः, तर्हि तेनैव हेतु तुपाठयोरपि विरोधपरिहारः कथंकारं न भवेत्। प्यष्टाध्याय्याः पाणिनेः कृतित्वमपाकृत्य तत्प्रवक ग्न्ति।

क्तकृतयोर्भेदः—वैयाकरणैः सर्वमपि संस्कृतवाङ् ज्ञात-कृत-व्याख्यानभेदैः पञ्चधा विभज्यते[3]। अ योः तेन प्रोक्तम् (अ० ४।३।१०१), कृते ग्रन्थे (अ० ४।३।१ प्रत्ययविधानमूचुः। कृतेषु ग्रन्थेषु सर्वा अपि र्वी तद्ग्रन्थकारस्यैव भवति। प्रोक्तग्रन्थेषु तु इत तेः। प्रवक्तारस्तु खलु पूर्वतो विद्यमानस्य शास्त्रस्य पा

---

१. अत्र 'क्त्वायामिट् प्रतिषेधात्' (महा०) इति व दशः, टायामादेशः' इति कैयटवचनं चानुसन्धेयम् (महा० प्रदीप तु भगवान् पाणिनिराकारलोपं शास्ति। यथा—जृत्रश्च्यं ।२।५५)।

२. निर्देशोऽयं पूर्वसूत्रेण वा स्यात्। महा० ७।१।१८॥ एवमन्य

व प्रोक्तविभाग आयुर्वेदीयचरकसंहिताया संस्कृत
हं संस्कृतलक्षणम्—

विस्तारयति लेशोक्तं संक्षिपत्यतिविस्तरम् ।
संस्कर्ता कुरुते तन्त्रं पुराणं च पुनर्नवम् ॥
अतस्तन्त्रोत्तममिदं चरके[1]णातिबुद्धिना ।
संस्कृतं[2]तत्…………………॥ सिद्धि० १२।

इयं तावद् वास्तविकी स्थितिः, यत्समग्रे संस्कृ
मूताः शास्त्रपदालङ्कृता विद्याग्रन्था सम्प्रत्युपलभ्य
तत्तदाचार्याणां प्रवचनरूपा एव, न तु तत्कृतयः ।

सति चैवम्,अष्टाध्यायीधातुपाठावपि पाणिनेः प्रं
ऽनयोर्यत्र क्वचिदपि विरुद्धांशो निरर्थकांशो वा
तन्त्रस्रोतोभ्यां संगृहीतौ तावित्येवं समाधेयम् । अय
ऽष्टाध्याय्यामप्युपलभ्यमानानां विरोधादीनां परि

भ्रान्तेरपर कारणम्—योऽयं खलु पाणिनीयो
प्रत्युपलभ्यते, तस्याऽद्य यावद् बहुकृत्वः परिष्कर
स्यव्यवस्थाऽभूत् (एतद्विषय उपरिष्टाद्वक्ष्यते) । अनय
ाऽपि बहुत्र विरोधस्य संभवः ।

## धातुपाठस्य पाणिनीयत्वे प्रमाणानि

भगवता पाणिनिना शब्दानुशासनस्य प्रवचनं
वः (अ० १।३।१) इति सूत्रविज्ञापितस्तत्खिलरूपो[3]

१. अयं चरको वैशंपायननाम्ना प्रसिद्धो महर्षिः । चर
ाख्या इति वृत्तिकृत् (४।३।१०४) । अत एव सर्वेऽपि वैशम्प
च्यन्ते । न एव शतपथादिष चरकाध्वर्यु-नाम्ना स्मर्यन्ते । द्र० व

७।२।७५), शमामधाना दाथ स्थान (७।४ ७।२।

षु सूत्रेषु धातुपाठान्तर्गताया धात्वनुपूर्व्याः स्मरण
विधैरनुबन्धैः सूत्रेषु कार्यविधानाच्चा[1]नुमीयते
सूत्रपाठ-प्रवचनात् प्रागेव प्रातिपदिकगणवद्[2] ध
वचनं व्यधायि। यतो नहि तत्प्रवचनाभावे कथं
प्रवचनं संभवति।

भाष्यकारस्तु भगवान् पतञ्जलिरिमं धातुपाठं पाणिन
ति। तथाहि—

एवं तर्हि सिद्धे सति यदादिग्रहणं करोति तज्ज्ञापयत्याचार्यः—
च सूत्रात्। महा० १।३।१॥

स्पष्टमेव धातुपाठस्य सूत्रवत् पाणिनीयत्वमुपपादि
पदेन पाणिनिरेवाभिप्रेतः, यतो हि तस्यैव भूवादयो ध
। इति सूत्रनिर्दिष्टाऽऽदिग्रहणेनैतज्ज्ञापनमुक्तम्।

अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति नैवंजातीयकानामिद्विधिर्भ
कश्चिन्नुमनुषक्तान् पठति—उबुन्दिर् निशामने, स्कन्दिर् गतिश
१।३।७॥

मन्नुच्चारणे य एव खल्वाचार्यो ज्ञापयति-क्रियायाः
ते-क्रियाया अपि, इत्यनया वाक्यरचनया विस्पष्टम्।
मनुषक्तानाम् उबुन्दिर् आदि धातूनां पाठकः पाणि
-तथाजातीयकाः खल्वाचार्येण स्वरितञितः पठिता य उभ
ायं चाकर्त्रभिप्रायं च क्रियाफलमस्ति। महा० १।३।७२॥

---

1. द्र० काशिका १।२।३, महाभाष्यदीपिका भर्तृहरिकृता पृष्ठ १
2. अनुदात्तङित आत्मनेपदम् (अ० १।३।१२) स्वरितञितः कर्त्र
... ... ... ... ...

ाणिनेरेवात्राचार्योऽभिप्रेतः । तथा सति पाणिनिने
ालवः पठिता इति व्यक्तम् । स च पाठो धातुगण
ान्यत्र ।

५—कृतमनयोः साधुत्वम् । कथम् ? वृधिरस्मायविशेषेणोपदि
मात् क्तिन्प्रत्ययः`````` । १।१।१॥

अत्र हि भाष्यकृता प्रकृतिपाठस्य साक्षादुल्लेखः कृत
ेष्टा स एव, येन क्तिन्प्रत्ययस्य विधानमुक्तम् । क्ति
ाता पाणिनिरेव, अतः प्रकृतिपाठे वृधेरुपदेष्टाऽपि
र्हति, नान्यः ।

६—बहवो हि वैयाकरणाः सूत्रपाठमिव धातुपाठम
न्यमानास्तत्रस्थप्रयोगसामर्थ्यादनेकेषां प्रयोगाणां
न्ते । तथाहि—

क—कथमुथमोपरमौ ? अड उथमने ( क्षीरत० १।२४६ )
१।७११) इति निपातनादनुगन्तव्यौ । काशिका ७।३।३४।
ख—धू विधूनने (क्षीरत० ६।९८), तृप प्रीणने (क्षीरत० पृ०
ातनादेतयोर्नुग् भविष्यति । न्यास भाग २ पृष्ठ ७९२॥
ग— व्याजीकरणे' लिङ्गाद् घञि कुत्वाभावः—व्याजः । क्षीर
घ—शुभ शुम्भ शोभार्थे ( क्षीरत० ६।३३ ) अत एव निप
क्षीरतरङ्गिणी ६।३३॥
ङ –शोभेति निपातनात् इति वामनः काव्यालंकारे (५।

एतैः प्रमाणभूतानामाचार्याणां वचनैर्धातुपाठस्य
वं सर्वथा विस्पष्टम्, नात्र कश्चिच्छंकालवोऽप्युदे

धात्वर्थनिर्देशः पाणिनीयोऽपाणिनीयो वा

नाम भू सत्तायाम् एध वृद्धौ इत्येवं सार्थको धातूना पाठ
ोधसमुदायस्य धातुसंज्ञायाः शङ्कैव नोदेति, भू शब्दा
पदस्य पाठात् । अत एव एतद्भाष्यव्याख्याने कैय:

ाठः परिच्छेदकः, तस्यापाणिनीयत्वात्, अभियुक्तैरुपलक्षणतयो

ायुक्तपदव्याख्याने नागेशः—भीमसेनेनेत्यैतिह्यम् इत्युक्त
ठेन धातुसंज्ञायां समानशब्दानां प्रतिषेधो वक्तव्यः । या इति
:। या इति धातुः, वा इति निपातः । नु इति धातुः, नु
ति धातुः, दिव इति प्रातिपदिकम् । महा० १।३।१।।
हि नाम धातुपाठेषु या प्रापणे, वा गतिगन्धनयोः इत्
देशः स्यात्, तर्हि शङ्कैवेयं नोदियात् । यः खलु प्रा
: स धातुसंज्ञो भविष्यति । आबन्तस्तु नैव प्रापणार्थ
तुसंज्ञायाः प्राप्तिः, यस्य प्रतिषेधः कर्तव्यो भवेत् ।
ादिष्वप्यूह्यम् ।

क) न अर्था आदिश्यन्ते क्रियावचनता च गम्यते । महा०
।।

कः खल्वपि पचादीनां क्रियावचनत्वे यत्नं करोति । महा० ३।१
को हि धातुप्रातिपदिकनिपातानामर्थानादेष्टुं समर्थः । महा० ।
ीयवाक्यं व्याख्ययन् नागेश आह—पचादीनामर्थरहि

भट्टोजिदीक्षितोऽपि भूवादिसूत्रकौस्तुभे (१।३।१)
न धातूनां पाठं स्वीचकार । तथाहि—

एभिः प्रमाणैरिदं विस्पष्टं यत्पाणिनीयधातुप
स्सोऽपाणिनीयः । पाणिनिस्तु केवलधातूनेवमर्थविर
पपाठेति ।

पाणिनीयत्वप्रतिपादकानि प्रमाणानि—तः
र्थनिर्देशानां पाणिनीयत्वं सिध्यति, तान्युच्यन्ते—

१—महाभाष्ये केचन धातवोऽर्थनिर्देशपुर
तेन ज्ञायते महाभाष्यात् प्राक् पाणिनीयधातुपा
मान आसीत् ।

२—चुटू-सूत्र-व्याख्याने महाभाष्यकारः पठ

अथवा आचार्यप्रवृत्तिर्ज्ञापयति—नैवं जातीयकानामि
यदयमिरितः कांश्चिन्नुमनुषक्तान् पठति—उबुन्दिर् निशामने,
णयोः, इति । महा० १।३।७॥

पाणिनिना धातुपाठस्य प्रवचनं कृतमित्यने
पुरस्तात् । अतो येन खल्वाचार्येण उबुन्दिर् स्कन्दिर् ध
नुषक्तौ च पठितौ, तेनैव तयोरत्र निर्दिष्टा निशामने
अपि पठिता इति विस्पष्टम् ।

३—भूवादिसूत्रेऽप्याह भाष्यकृत्—

वपिः प्रकिरणे दृष्टः, छेदने चापि वर्तते—केशश्मश्रु व
चोदनायाञ्चासु दृष्टः, प्रेरणे चापि वर्तते—अग्निर्वा इतो वृष्टिमी
यन्ति इति । करोतिरभूतप्रादुर्भावे दृष्टः, निर्मलीकरणे चापि वर्त
कुरु, उन्मृदानेति गम्यते । महा० १।३।१ ॥

अत्र महाभाष्यकृता केषाञ्चिदर्थानां दृष्टत्वमु
वर्तनत्वम् । तत्र दृष्टः-वर्तते-पदयोरैकार्थ्यं नेति तु द

माण्य स्वीकुर्वन्त । तद्यथा—

—कथमुपसोपरमौ ? अड उद्यमे यम उपरमे इति निपातनादवृग

७।३।१४ ॥

—धू विधूनने तप प्रीणने इति निपातनादेतयोर्नुग् भवि

ग २ पृष्ठ ७९२ ।

—शुभ शुम्भ शोभार्थे । अत एव निपातनात् शोभा

।३३ ॥

—शोभेति निपातनात् इति काव्यालङ्कारे (५।२।४१) वामः

श्चि हि नाम धात्वर्थनिर्देशः पाणिनीयो नाभविष्यत

ानां तत्र सूत्रवत् प्रामाण्यबुद्धिरपि नोदैष्यत्[१] ।

त्र सूत्रवत् प्रामाण्यबुद्धिस्तस्मात् स्पष्टमेव यद् धा

माणीकुर्वन्तो वैयाकरणास्तानर्थनिर्देशान् पाणि

—धातुवृत्तिकारा बहुत्र धातुसूत्राणां संहितापाठस्य

त्य सूत्रविच्छेदे विप्रवदन्ते । यथा—

—तपऐश्वर्येवावृतुवरणे (क्षीरत० ४।४८,४९) इति दैवा

चमानं वा-पदं पूर्वसूत्रस्यावयवः, उत्तरस्य । पू

कस्य तप सन्तापे ( क्षीरत० १ । ७१२ ) इत्यस्यैश्वर्ये व

वष्ट इत्येके मन्यन्ते । उत्तरावयवेऽपि वा इति पृथ

ाह्निकस्य वृतु-धातोः ( क्षीरत० १।५०४ ) वरणे वा ।

त्यपरे संगिरन्ते, धात्वेकदेशो वावृतु इति धा

न्ते ।[२]

---

द्रष्टव्यः । ईडेः चोदनायाञ्चाऽर्थौ धातुपाठे पठितौ नोपल

रिष्टाद् वक्ष्यते ।

मन्यमानाः पत-धातोर्गतौ वा णिजुत्पद्यत इत्याहुः ।
वयवं मन्यमाना अपि वा पदं स्वतन्त्रमभ्युपगम्य
दू वाऽदन्तत्वमाहुः, अन्ये तु वा शब्दं धात्ववयवं
धातुं स्वीचक्रुः ।[२]

अयं सर्वोऽपि विवादो धात्वर्थनिर्देशानां पाणिनं
ापपद्यते । यदि हि नामैतादृशेषु स्थलेषु भेदस्पर्श-वत्
श एव पाणिनीयोऽभविष्यत्तर्हि तपवावृतु पतवापश इत
वा-शब्दे पठ्यमानेऽपि वावृतु धातोः वापश धातोश्च
नोत्पद्यते, वा-रहितपाठे तु नतराम् । यदि हि तप
र्थविरहिते पाठे सन्देहावसरः स्यादपि तदा तप-व
—वृतु, एवं पत—वापश यद्वा पतवा—पश इत्येवं
ु यथा वृत्तिकारा आहुस्तथा ।

सायणः सार्थपाठं पाणिनीयं मन्यमानः त
ात्र तप ऐश्वर्ये वा—वृतु वरणे इत्येवं, तप ऐश्वर्ये
ावं चोभयथा सन्धिविच्छेदमपि पाणिनीयमाह । त

अस्माकं तूभयमपि प्रमाणमाचार्येणोभयथा शिष्याणां प्रति
ते पृष्ठ २९३ ।

६—यदि हि पाणिनीये धातुपाठेऽर्थनिर्देशोऽप
हि समाने प्रघट्टके एकस्यैव धातोर्द्विः पाठो नोपपद्य
ादर्शनाय सकृत् पाठ एव पर्याप्तः स्यात् । तथाहि—

क—अट्टादिषु हुडः—हुडि संघाते, हुडि वर
७२,१८०) ।

ख—शौट्टादिषु किटः—किट खिट त्रासे, इट

यथा—

-रघि लघि गत्यर्थाः, लघि भोजननिवृत्तावपि (क्षी
।
-गज गजि......शब्दार्थाः, गज मदने च (क्षीरत
।
-तय नय गतौ, तय रक्षणे च (क्षीरत० १।१३८,१३९

न्यत्रापि द्रष्टव्यम् ।

र्थनिर्देशस्यापाणिनीयत्वे एकस्य धातोः समाने प्र
नमेव संभवति, न द्विः । अर्थनिर्देशाभावेऽर्थभेदात्
तोरभावात् । यदि हि नाम केनचिद् अर्वाक्कालिके
णिनीये पाठे धातुभिः सह अर्थसंयोजनं कृतं स्या
तोर्द्वावर्थावेकस्मिन्नेव स्थाने निर्दिशेत्, न तु पाणि
स्य धातोरर्थभेदात् द्वयोः स्थानयोः पाठं कुर्यात् । ः
। पाणिनिना सूत्रपाठे बहुलं छन्दसि इति समानवा
मर्थभेदात् चतुर्दशसु स्थानेषु पठितं, तथैव धातुपाठे
तुरर्थभेदाद् द्विस्त्रिर्वा पठित इति ।

प्रमाणैर्धातूनामर्थनिर्देशः पाणिनीय इति विस्पष्ट

## धातुपाठस्य द्विधाप्रवचनम्

वादयोर्निर्णयः—धातुपाठस्थोऽर्थनिर्देशः पाणिनीय ः
त्यत्रोभयथाऽपि प्रमाणानि निर्दिष्टानि। तत्र त्वेष निण
चार्येण भगवता पाणिनिना धातुपाठस्य प्रवचनमका
शण्या अर्थनिर्देशं विना ...

अष्टाध्याय्या द्विधापाठः—यथा धातुपाठस्य द्वि
णेनीयः, एवमष्टाध्याय्या अपि द्विविधः पाठ उप
र्तिकभाष्याश्रयभूतः, अपरः काशिकादिवृत्तिकारा
र्तिकभाष्याश्रयभूतोऽष्टाध्याय्या लघुपाठः काशि
पाठः। अष्टाध्याय्या द्विविधपाठविषयेऽस्माभिः 'सं
त्र का इतिहास' नाम्नि ग्रन्थे विस्तरेण प्रतिपादि
व्यम्, विस्तरभिया नेह प्रपञ्च्यते। एवमेवान्येष
रुक्त-स्मृति-नाट्यशास्त्रादिषु द्विविधः पाठ उपलभ्

वार्तिकपाठस्याश्रयः—यथा वार्तिककारोऽष्टाध्
ठमाश्रित्य वार्तिकं सूत्रयामास, तथैव धातुपाठस्यापि
पाठमेवाशिश्रयदिति परिभाषा ग्रहणं च (१।३।१) इति
तञ्जलव्याख्यानाच्च सुवचम्।

भट्टनागेशस्य भ्रान्तिः—धातूनामर्थनिर्देशवि
प्रकारकान् निर्देशानुपलभ्य पातञ्जले वचसि कृत
गणितशब्दशास्त्रस्तत्र भवान् नागेशभट्टोऽपि भ्रान्त
था। स हि 'कांश्चिन्नुमानुषक्तान् पठति—उबुन्दिर् निशा
षणयोः (२।३।७) इति भाष्यपाठं व्याचक्षाण आह—

नुमेति—एतद्भाष्यात् केषाञ्चिद् धातूनामर्थनिर्देशसहि
ज्ञायते। भाष्यप्रदीपोद्द्योत १।३।७॥

किम् अर्थनिर्देशो भीमसेनीयः—ऐतरकालि
ानीया विद्वांसो मन्यन्ते यत् पाणिनीये धातुपाठे
न्यन्ते ते केनचिद् भीमसेननामकेन वैयाकरणेन पठि

१।२।२०॥
' च या प्रापणे इत्याद्यर्थनिर्देशो नियामकः। तस्यापाणिनीयत्वा
अर्थं निर्दिदिक्षुरिति स्मर्यते।' श० कौ० १।३।१॥
'तुप्रदीपकारो मैत्रेय आह—
पून् यथा भीमः श्रोक्तवांस्तद्वदागमात्। धातुप्रदीप पृष्ठ १।
माख्यातिभाष्यव्याख्याता सिद्धसेनगणी ( सं० ७०८

त् परतोऽन्यैर्वैयाकरणैरर्थद्वयेऽपठितोऽपि [चिती] धातुः संज्ञ
। पृष्ठ २९४।
र्दैष्टैः प्राचीनैः सुहृदैश्च प्रमाणैर्धात्वर्थनिर्देशानां पाणि
ागेशादीनां वचनानि भ्रममूलान्येव। 'भीमसेनकृतोऽ
नहि कस्मिंश्चिदपि प्रामाणिके ग्रन्थ उपलभ्यते। अ
ति स्मर्यते' इत्यादिनिर्देशोऽपि भ्रान्तिमूलक एव
रुद्धरणयोस्तु नैतद् व्यक्तमुक्तं यद् भीमसेनोऽर्थनिर्देश
त्रेतावदेव ज्ञायते यदस्ति भीमसेनस्य पाणिनीयधा
श्चित् सम्बन्ध इति।
कारणम्—भीमसेननामा कश्चिद् वैयाकरणो धातुपा
व्याख्याता वाऽऽसीद् इत्युपरिष्टाद् वक्ष्यते। सम्भाव्यं
न पूर्वनिर्दिष्टा भ्रान्तिरुत्पन्ना स्यात्।
भ्रान्तिः—केचनेतिहासानभिज्ञा एनं भीमसेनं पाण्डु
रनामानं मन्यन्ते। तद्नतीवाविचारितरमणीयम्
नैरेव भारतयुद्धात् सार्धद्विशतवर्षेभ्य उत्तरतो बभूव

---

ेयम्—न च प्रापणादिरर्थो नियामकोऽनार्षत्वात्। अभियुक्तैः

यः खलु धातूनामर्थविरहितो भवेधस्पर्ध इत्येवं
इदानीं नोपलभ्यते। मन्ये पठनपाठने सार्थस्य वृ
लघुपाठो नाशं गत इति।

## वृद्धस्य त्रिविधः पाठः

भारतीये वाङ्मये बहूनां ग्रन्थानां देशभेदेन f
पलभ्यन्ते। पाणिनीयव्याकरणेऽपि केषाञ्चिद् ग्रन्थान
लभ्यते। तथाहि—

**अष्टाध्याय्याः**—पाणिनेरष्टाध्याय्याः पौर्वः, पश्चि
क्षिणात्यश्चेत्येवं त्रयः पाठा उपलभ्यन्ते। काश्यां
त्तयं पाठमाश्रयति स पूर्वदेशीयः। क्षीरस्वामी क्ष
त्रपाठं निर्दिशति स पश्चिमोत्तरदेशीयः। दाक्षिणा
त्यायनो[1] यं सूत्रपाठमनुसृत्य वार्तिकपाठं प्रोव
क्षिणात्यः। एषु पूर्वदेशीयो वृद्धपाठः, अपरौ तु लघु
येण समानौ।

**पञ्चपादुणादेः**—पाणिनीयसम्प्रदायसंबद्धानां
सूत्राणामपि त्रिविधः पाठो दृश्यते।[2] उज्ज्वलद
ऽः। क्षीरस्वामिना क्षीरतरङ्गिण्यामुद्धृतः पश्चिमो

---

१. प्रियतद्धिताः दाक्षिणात्याः। महाभाष्य १।१, आ० १

२. पञ्चपादुणादिसूत्राणां त्रिधा विभागोऽस्माभिरेवोपज्ञा
द्रमहावृत्तेरादौ 'जैनेन्द्र व्याकरण और उस का खिलपाठ' नाम
यः (द्र० भारतीय ज्ञानपीठ काशी संस्क०)। अयं पञ्चपादी

एव सायस्य धातुपाठस्यापि द्रमिदृन

। । तथाहि—

ीयः—धातुपाठस्य प्राच्या व्याख्यातारो मैत्रेयप्रभ
द्रियन्ते, स पौर्वः पाठो द्रष्टव्यः । न्यासकारोऽपि प
ते ।

ोत्तरदेशीयः—पश्चिमोत्तरदेशीयाः क्षीरस्वाम्यादयो
त, स पश्चिमोत्तरदेशीयः ।

णात्यः—अयं पाठोऽस्माभिर्न साक्षादुपलब्धः । प
पाल्यकीर्तिराचार्यो यं पाणिनीयं धातुपाठमाश्रित्य स
शच, स दाक्षिणात्यपाठः सम्भाव्यते । पाल्यकीर्तेध
पौर्वपाठेन संवदति यथा पश्चिमोत्तरपाठेन । तेन
पञ्चपादुणादिसूत्राणां दाक्षिणात्यः पाठः पश्चिमो
तः संवदति, तथैव धातुपाठस्यापि दाक्षिणात्य
ाठेन प्रायः समान एव बभूवेति शक्य ऊहितुम् ।

ाठचित्रम्—धातुपाठस्य ये विविधाः पाठा अधस्ता
सौकर्येण ज्ञानाय चित्रं चित्रीयते—

पाणिनीयो धातुपाठः

तः — धात्वर्थसहित

पौर्वः — पश्चिमोत्तरीयः — दाक्षिण

यः खल्वर्थनिर्देशसहितो धातुपाठः सम्प्रत्युपलभ्य
महत्यव्यवस्था दृश्यते। तत्र केषांचिद् धातूनां क्रम
ऽर्थविपर्ययः, केषाञ्चिदभावः, केषांचित् पुनरा
। नहि धातुपाठस्य कयोरपि द्वयोर्व्याख्यानयोः स
ते। एषा चाव्यवस्था चिरकालादेव प्रसृता, उप
ता। तथाहि—

१—जक्षित्यादयः षट्……नवार्थः परिगणनेन, आगणान्ता
हि प्राप्नोति आङः शासु……। महा० ६।१।६॥

एतेन भाष्यवचनेन स्पष्टं यद्भगवतः पतञ्जलेः काले
( इत्यस्य धातोः वेवीङ् वेतिना तुल्ये (क्षीरत० २।७८)
पाठ आसीत् ॥[1] भाष्यव्याख्यातुः कैयटस्य काले
ातोः वेवीङ उत्तरं पाठो नासीदिति तदीयव्याख्यान
तेन कैयटात् प्रागेव केनचिद् विदुषा आङः श
वेशने (क्षीरत० २।१४) इत्यनन्तरं पाठः परिवर्तितः इत्य

२—आगणान्तायामभ्यस्तसंज्ञायां येऽन्ये तत्र धातव
र्थं प्राप्नोति, तत् परिहरन्नाह भाष्यकारः—षसि
।

अत्राह कैयटः—षस शस्ति स्वप्ने इति ये न पठन्ति, के
तौ इति तन्मतेनैतदुक्तम्।

एतेन कैयटकालेऽत्र द्विविधः पाठ आसीदिति स्
ः पाठोऽद्याप्युपलभ्यते। क्षीरतरङ्गिण्यां षस स्वप्ने
८२) इति पाठो दृश्यते, धातुप्रदीपे षस सस्ति स्वप्ने

चुरादिगणारम्भे ।

[ृ]त्तिकारः सायणो बहुत्रेत्थं लिलेख—

चेत् धृञ् धारणे इति पठन्ति, सोऽनार्षः······। अस्माभिस्तु [प्र]करणे हरतेरनन्तरं पठित्वाऽयमुदाहृतः ।[1] धातुवृत्ति

[धा]तौ······'गोपोष्टक्' इत्यत्र न्यासपदमञ्जर्योरयं धातुरादादिक इति चास्य प्रयोजनं नास्ति । अस्माभिस्तु क्वाप्ययं पठितव्य इति [प]ठितः । धातुवृत्ति पृष्ठ १८५ ।

[स]मवाये······एवं च न्यासकारादीनां बहूनामभिमतत्वादयं धातु-[ध]ातुवृत्ति पृष्ठ २०२ ।

[त]ु भाष्यवृत्तिन्यासपदमञ्जर्यादिषु तथाऽयं धातुर्नेति प्रतीयते इति आत्रेयमैत्रेयपुरुषकारादिषु दर्शनादिहास्माभिर्लिखितम् । धातु-

[च]तुर्दश स्वामिकाश्यपानुसारेण लिख्यन्ते । धातुवृत्ति पृष्ठ २९३ [धा]तो वृद्धिश्च मैत्रेयानुरोधेनास्माभिर्दण्डके पठितः । धातुवृत्ति

करणे इति भूवादौ पठ्यते ।······अनेन प्रकारेणास्माभिर्धातु[पाठ]ः ।[3] ऋग्भाष्य १।८२।१॥

भाष्ये (१।३।१) पठ्यते—ईडिः स्तुतिचोदनायाच्ञा

---

[सं]स्करणेऽत्र पाठोऽशुद्धो वर्तते ।

[पा]ठः चौखम्बासंस्करणे 'जॄ वयोहानौ' (पृष्ठ २९४) इत्यत्र नोप [सं]स्करणे (भाग ४. पृष्ठ २९४) तु दृश्यते । मन्ये काशीसंस्करणे

ठे चिरकालात् पाठविपर्यासारम्भोऽभूत् । सायणे
हत्या स्वच्छन्दतया पाठपरिवर्तनं परिवर्धनं च व्य

साम्प्रतिकः पाठः सायणपरिष्कृतः—पाणि
ः सार्थो धातुपाठः सम्प्रत्युपयुज्यते, न स प्राचीनो
[ विविधग्रन्थसाहाय्येन सायणद्वारा परिष्कृतः ।
स्तु पूर्वोदाहृतैस्तदीयवचनैः स्पष्ट एव । तदनु भट्टो
त्र स्वल्पः संस्कारो विहितः । एताभ्यामुभाभ्यां सं
वाद्यत्वे पाणिनीयत्वेनाभ्युपगम्यते वैयाकरणैः । तत्र
तरप्रसिद्धानां भूयिष्ठानां धातूनां प्रक्षेपात् स्वश
रित्यागाच्चायं पाणिनीयशब्देन व्यवहर्तुं योग्यः । :
ति न्यायेन तादृशपाठस्य सायणपाठः इत्येव समीचीन

भोटलिङ्गीयः पाठः—संप्रति पाश्चात्यलेखकैस्त
तीयैश्च यो धातुपाठः प्रामाणिकत्वेन स्वीक्रियते, स
ोटलिङ्गेन संगृहीतः, न स पाणिनीयः । तेन हि ल
ामपि यथासम्भवं सर्वेषां धातूनां तत्र विना विचा
ये । अतोऽयं पाठः सायणपाठादपि भ्रष्टतरः, :
र्तते ।

## संहितापाठस्य प्रामाण्यम्

यथाऽष्टाध्याय्यां सूत्राणां संहितापाठस्यैव
भ्यते पतञ्जलिप्रभृतिभिराचार्यैस्तथा धातुपाठेऽपि
संहितापाठस्यैव प्रामाण्यमुरीक्रियते व्याख्याकारैः
त्र धातुसूत्रविच्छेदे विवदन्ते वृत्तिकाराः । तथाहि

-पतगतौमापशातुपसर्गात् इति संहितया चुरादौ पठः
स्वामी—
ी, पतति……। वा शब्दस्तूत्तरैकदेशार्थः, वावृतुवत् । १०।२४
सूत्रे स पुनराह—
तुपसर्गाद् वादन्तत्वमित्येके—पशयति पाशयति । १०।२५०॥
व्याख्यानभेदो संहितापाठमाश्रित्यैव संभवति, नान्य
माह सायणः—
ामी संहितायां धातुपाठाद् वाशब्दमुत्तरधातुशेषं वष्टि इति । ध
७॥

ा धातुसूत्रविच्छेदोऽपि पाणिनीयः—यः पूर्वत्र संहि
त्य विविधरूपः सूत्रविच्छेदः प्रदर्शितः, स पाणि
नां मतम् । इदमेवोररीकृत्य तपऐश्वर्यैवावृतुवरणे इत्यत्र

तूभयमपि प्रमाणमाचार्येणोभयथा शिष्याणां प्रतिपादनात् । धा
।

भावः—धातुपाठं प्रवचता भगवता पाणिनिना केच
ऐश्वर्ये वा, वृतु वरणे' इत्येवं विच्छिद्य प्रतिपादित
र्ये, वावृतु वरणे' इत्येवम् ।[2]

## पूर्वधातुपाठानामनुवादः

ठः पाणिनेः प्रोक्तरूपो ग्रन्थो न तु कृतरूपः । प्रोक्त
। पूर्वग्रन्थेभ्य एवोपयोगिनोऽशान् शब्दतोऽर्थतः

---

ीरतरङ्गिणी (४।४८, ४९), धातुप्रदीपः (पृष्ठ ६१) पुरुषका
तिश (पृष्ठ २९३) च द्रष्टव्या ।

यों णां धातुसूत्राण्येवानूदितवान् इत्यत्र नास्ति लेश
र: । तथाहि—

१—यथाऽष्टाध्याय्या: सूत्राणि ततः प्राचीनैर
ख्यादिसूत्रैः संवदन्ति,[१] तथैव पाणिनेः धातुसूत्रा
कये क्रमवैपरीत्येऽपि तत्प्राचीनैः काशकृत्स्नधातु
रशः संवदन्ति ।

२—यथाष्टाध्याय्यां यत्र तत्र केषांचित् प्राचीन
त्राणां सद्भाव उपलभ्यते,[२] तथैव पाणिनीये धातु
ात् छन्दोबद्धसूत्राणां सद्भावो दृश्यते । तथाहि—

क—भ्वादौ चते चदे च याचने इति पठ्यते (क्षीर
त्र चकारो भिन्नक्रमः सन्नपि रेटृ परिभाषणे इति पूर्वसू
ाषणार्थं समुच्चिनोति । तथा सति, अन्यत्रेवेहापि
ठेन भाव्यम् । परन्त्वत्र छन्दोऽनुरोधेन[३] चक
ठितः ।[४]

चते चदे च याचने इत्यत्र छन्दोऽनुरोधेन चकार
थ्यमविज्ञाय क्षीरस्वामिना पूर्वधातुसमुच्चयार्थ इत्यु
ातोर्याचनं परिभाषणं चोभावर्थौ विज्ञायेते । व्य
क्रम्, अन्यत्र क्वचिदपि पूर्वधातुसमुच्चयाय चव
मचन्द्राचार्यस्तु क्षीरस्वामिनो व्याख्यानमनुसृत्य 'रेटृ
:' (१।८९७) इति सूत्रे विस्पष्टं याचनपदं पपाठ ।

---

१. द्रष्टव्यानि 'सं० व्या० शास्त्र का इतिहास' ग्रन्थस्य
ा प्राचां सूत्राणि ।

२. द्र० सं० व्या० शास्त्र का इतिहास, भाग १ पृष्ठ १

३. 'चते चदे च याचने' ...

ह्वादौ छिघ आस्कन्दने, उदात्तावनुदात्तेतौ, तिक तिग च,
त० ५।२२—२५) इति पठ्यते (इह क्षीरस्वामिमै
चकारात् स्कन्दनार्थं समुच्चिन्वन्ति । अत्र उदात्तावनु
ग्रवधानेऽपि चकारः स्कन्दनार्थं समुच्चेतुं कथं स
त्तेकारैः । काशकृत्स्नकालन्त्रहैमशाकटायनधातुप
ात्वोर्हिंसार्थत्वमेवोक्तम्, न स्कन्दनार्थत्वम् । अपि
(क्षीरत० ५।२५) इत्यत्राह क्षीरस्वामी—तिक तिघ
—चषघोति इति । एतेन ज्ञायते तिक-तिघ-धात्वोः
श्चकारः केषांचिन्मत उत्तरधातोराद्यवयवः । वस्तु
ास्कन्दने तिक, तिग च षघ हिंसायाम् इत्यनुष्टुभो द्वे च
ाचीनस्य छन्दोबद्धधातुपाठस्यैव पठिते । तेन च
मश्छन्दोनुरोधेन पठितः, न स पूर्वधात्वर्थानुकर्षण
ोराद्यवयवार्थ इति ।[1] तस्माच्चकारस्योभयथाऽपि
ासम्, तिकतिगधात्वोर्हिंसैवार्थः ।

चुरादौ उपसर्गाच्चदैर्घ्ये (१०।२२९) इति पठ्यते । अत्र इ
भिन्नक्रममाहुः' इति वदन् 'उपसर्गाद् दैर्घ्ये च' इति पाठेन भ
ते । वयन्त्वत्रापि छन्दोवशादेव चकारो भिन्नक्रमः प
।[2]

प्रमाणैर्निरूपणं यत् पाणिनेः प्राक् कश्चिद् धातुपाठश्छ

---

तर्नाग्यम्—'जुड प्रेरणत्राची शुठालस्ये गज माजे च । शब्दार्थे
रुपकारोद्धृते ( पृष्ठ ५० ) श्लोकधातुपाठांशे 'गज माजे च'
ण ।

है—

क—चवर्गान्तेषूदात्तेषु परस्मैपदिषु इकारान्तोऽ
पठ्यते । क्षीरत० १।१४९॥

ख—उदात्तेष्वन्तःस्थान्तेषु अनुदात्त इकारान्तो
० १।३७४॥

ग—ऊष्मान्तेषु परस्मैपदिषु वान्तः कत्र-धातुः। क्षी
अयं प्रकरणविरोधः पूर्वाचार्याणामनुरोधत इति
आहुः। एतदेवाभिप्रेत्य चि चये (१।१४९) इत्यत्र वदय
क्षीरस्वामी कस्यचित् प्राचीनस्य धातुगणव्याख्यातुः
ते—

पाठमध्येऽनुदात्तानामुदात्तः कथितः क्वचित्।

अनुदात्तोऽप्युदात्तानां पूर्वेषामनुरोधतः॥ क्षीरत०

अत्र इदमप्यवधेयम्—काशकृत्स्ने धातुपाठेऽप्येवमे
त्तेषु मध्ये इकारान्तस्यानुदात्तस्य क्षि-धातोः पाठ उ
एतेनापि पाणिनीयधातुपाठस्य प्राचां धातुपाठानाम
म्।

## श्लोकधातुपाठः

पाणिनेः प्राक् कस्यचिच्छ्लोकबद्धो धातुपाठ उ
तपादितं पुरस्तात्। अर्वाचीनेष्वपि केषुचिद् ग्रन्थे
ऽस्य केचनांशा उद्धृता उपलभ्यन्ते। तथाहि—

१—तथा च 'पूरी आप्यायने स्वदास्वाद' इति श्लोकधातुपाठः
। ४४।

२—यत्तु श्लोकधातुपाठे 'फक्क नीचैर्गतौ तक्क मर्षणे बुक्क भाषणे'

पुरुषकार पृष्ठ ७६ ।
'विश मृश णुद प्रवेशामर्शक्षेपेषु षदॢ विशरणार्थः' इति च ।
रुषकार पृष्ठ ८३॥
तथा च—'तव' पत ऐश्वर्ये वावृतु वर्तने कासृ दीप्त्यर्थे' इति ।
देवराजीया निघण्टुव्याख्या २।११।२॥
प्रमाणैः श्लोकबद्धः कश्चिद् धातुपाठः पुरुषकार
दैवराजस्य च काले विद्यमान आसीदिति सुव्यक्त
तेरासीदिति न शक्यते वक्तुम् ।

## धातुपाठसंबद्धा अन्ये ग्रन्थाः

पाठसम्बद्धा अन्येऽपि केचन ग्रन्था विद्यन्ते । तद्यथ
ाख्यातनिघण्टुः—अयं ग्रन्थः पुरुषकारे षण्णवतितम
ान उद्ध्रियते । पुरुषकारविरचयितुः कृष्णलीलाशुक
ास्य त्रयोदशशताब्द्या उत्तरार्धे इत्यस्माभिः स्वीये
का इतिहास' नाम्नि ग्रन्थे (भाग १, पृष्ठ ४४५–४
। आख्यातनिघण्टुस्तस्मात् प्राचीन इति सुव्यक्त
तुर्नामादि किमपि न ज्ञायते ।
ाख्यातचन्द्रिका—अस्य कर्ता भट्टमल्लो वर्तते । अयं ग
ाथेन नैषधव्याख्याने (४।८४) स्मर्यते । अतः भट्टम
ुर्दशशताब्द्याः पौर्वकालिक इत्येव शक्यते वक्तुम्
न्मते तु १२५० वैक्रमाब्दात् पौर्वकालिको मल्लि
ान्तरेण प्रतिपादयिष्यामः ।

---

त्र 'तप' इति युक्तः पाठः स्यात् ।

तथ्य चत् भट्टमल्लः १२२५ वैक्रमाब्दात् प्राचीन इ
ते वक्तुम् ।

एको मल्लः क्षीरस्वामिना विट आक्रोशे (क्षीरत०
सूत्रव्याख्याने स्मृतः । तथाहि—

अत एव विट शब्दे पिट आक्रोशे इति मल्लः पर्यट्टकान्तरे वि

अयं मल्ल आख्यातचन्द्रिकायाः कर्तुर्भट्टमल्लाद् f
न किञ्चित् प्रमाणमुपलभामहे ।

वेङ्कटरङ्गनाथस्वामिनाऽऽख्यातचन्द्रिकाया
ातानां समाम्नायरूपेणार्थबोधका इमे (३-९) ग्रन्था

३—कविरहस्यम् हलायुधस्य (सं० १२३०—१२६०) ।

४—क्रियाकलापः विद्यानन्दस्य ।

५—क्रियापर्यायदीपिका वीरपाण्ड्यस्य ।

६—क्रियाकोशः रामचन्द्रस्य ।

७—प्रयुक्ताख्यातमञ्जरी कविसारङ्गस्य ।

८—क्रियारत्नसमुच्चयः गुणरत्नसूरेः ।

९—धातुरूपभेदः दशबलस्य वरदराजस्य वा ।

१०—धातुसंग्रहः—अयं ग्रन्थो मालतीमाधवटीकाकारे
व्याख्याने स्मृतः । तथाहि—

अभिसन्धिर्वञ्चनार्थे इति धातुसंग्रहः ।

जगद्धरस्य १३५० वैक्रमाब्दः काल इत्यैतिहासिका
त् प्राक्तनोऽयं धातुसंग्रह इति स्पष्टम् । ग्रन्थक
पे न ज्ञायते ।

११—ओष्ठ्यकारिकाः—अयं षट्कारिकात्मको ल
नू पवर्गीयबकारवतां धातूनां संग्रहो वर्तते । अ

ः पाणिनेः प्रवचनाद् आरभ्याद्य यावदनेकैराचार्यैर्वि
ठस्य व्याख्यानानि व्यरचिषतेत्यत्र नास्ति सन्देह
व व्याख्यानान्युपलभ्यन्ते, बहूनां नामान्यपि न ज्ञायः
वृत्तिकाराणां नामानि विज्ञायन्ते, व्याख्यानानि च
परिष्टाद् वर्ण्यन्ते ।

## १—पाणिनिः

ना पाणिनिना शब्दानुशासनं प्रवचता तस्य कार्
येभ्यः प्रतिपादिता इत्यस्माभिः स्वीये 'संस्कृत व्याक
इहास' नाम्नि ग्रन्थेऽनेकैः सुदृढैः प्रमाणैर्व्यक्तीकृतम
नेना स्वीयधातुपाठं प्रवचता तस्यापि काचिद् वृ
र्थं प्रतिपादिता स्यादित्यनुमानं स्वत एवोदेति । उ
ऽकानि कानिचित् प्रमाणान्यप्युपलभ्यन्ते । तद्यथा-
थाहि पाणिनिनाऽष्टाध्यायीं प्रवचता किञ्चित् सूत्रं के
थंचित् प्रतिपादितम्[3], अपरेभ्योऽन्यथा, यथा
त्रस्य केभ्यश्छात्रेभ्य काचिद् वृत्तिः प्रतिपादिता, अ
थैव धातुपाठं प्रवचतापि भगवता केभ्योऽन्तेवासि

यमपि भीमसेनेन पवर्गान्तप्रकरणे पठितः । अत्र अर्व पर्व इत्यन्त
स्थे मुद्रितः ।
टीकासर्वस्व, भाग १, पृष्ठ ७ ।
यम्—भाग, १ पृष्ठ २१५—२१७।
था ह्याचार्येण शिष्याः सूत्रं प्रतिपादिताः । केचिदाकडाराद
डारात परं कार्यम । महा० १।४।१॥ [illegible]

अस्माक तूभयमपि प्रमाणमुभयथा शिष्याणां प्रतिपादनात् । पूः

२—उदात्तेषु चान्तेषु धातुषु अनुदात्तस्यैकारान्तस्य

र्णं निदर्शयन् क्षीरस्वाम्याह—

वक्ष्यति च—

पाठमध्येऽनुदात्तानामुदात्तः कथितः क्वचित् ।

अनुदात्तोऽप्युदात्तानां पूर्वेषामनुरोधतः । क्षीरत० १।१।

अत्र 'वक्ष्यति' क्रियायाः कः कर्तेति न व्यक्तीकृतं क्षीर

क्षीरस्वामिनो वाक्यविन्यासप्रकारेणानुमिनुमो यद्

ना धातुपाठं प्रवचता या तदीया वृत्तिः शिष्येभ्य

तत्रैवायं श्लोकोऽपि भगवतोपदिष्ट इति ।

## २—सुनागः

महाभाष्येऽसकृत् सौनागवार्तिकान्युपलभ्यन्ते ।

नुसारं सुनागनामाऽऽचार्य एषां प्रवक्ता ।[२] अयं च

नादर्वाचीन इति कैयटव्याख्यानादवसीयते ।[३]

वार्तिकप्रवक्त्रा सुनागेन पाणिनीयधातुपाठस्यापि

नमुक्तमिति कतिपयैः प्रमाणैरवगम्यते । तथाहि—

१—विभाषा भावादिकर्मणोः (अष्टा० ७।२।१७) इत

मनः पठति—

सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन, अस्यतेः

२—इदमेव सौनागमतं धातुवृत्त्याद्यसकृन्निर्दिशति क

---

क्वचिद् वर्णस्य । भर्तृहरिकृता महाभाष्यदीपिका, पृष्ठ ३७१ ।

र्येण शिष्याः प्रतिपादिताः । काशिका ५।१।५० ।

१. महाभाष्य २।२।१८॥ ३।२।५६॥ ४।१।७४,८७॥

३—क्षीरतरङ्गिण्या आद्यन्ते च धात्वर्थसम्बन्धि सौनागमत-मित्थमुद्धरति क्षीरस्वामी—

धातूनामर्थनिर्देशोऽयं निदर्शनार्थ इति सौनागाः। यदाहुः—

क्रियावाचित्वमाख्यातुमेकोऽत्रार्थः प्रदर्शितः।
प्रयोगतोऽनुमन्तव्या अनेकार्था हि धातवः॥[१]

वामनक्षीरस्वामिभ्यामुद्धृते मते धातुपाठविषयके इति तु स्पष्टमेव। अनयोः प्रतिपादनं भगवता सुनागेन क्व कृतमिति नोक्तमुद्धर्तृभ्याम्। तत्र प्रथमं मतं तदीयवार्तिकपाठेऽपि कथंचित् सम्भवति, परन्तु क्षीरस्वाम्युद्धृतं द्वितीयं मतं तदीय धातुव्याख्यान एव संभवति, नान्यत्र। अतोऽनुमीयते तत्र भगवता सुनागेन पाणिनीय-धातुपाठस्य किमपि व्याख्यानं विरचितमिति।

## ३—भीमसेनः

कस्यचिद् भीमसेनस्य पाणिनीयधातुपाठेन सह कश्चिन्महत्त्वपूर्णः संबन्ध इति विविधग्रन्थकारवचनैः सुस्पष्टं विज्ञायते। तथाहि—

१—सर्वानन्दः (सं० १२१५) स्वीयेऽमरटीकासर्वस्वे १।१।७ व्याख्यान एवमाह—

अर्ब पर्ब बर्ब कर्ब खर्ब गर्ब मर्ब सर्ब चर्ब गतौ इत्ययमपि भ्वादौ भीमसेनेन पवर्गान्तप्रकरणे पठितः।[२] भाग १, पृष्ठ ८।

१—सर्वानन्दात् प्राचीनो मैत्रेयो (सं० ११६५) धातुप्रदीपादौ भीमं स्मरति—

बहुशोऽभूत् यथा भीमः प्रोक्तवांस्तद्वदागमात्।

३—मैत्रेयादपि बहुप्राचीन उमास्वातिभाष्यव्याख्याता सिद्ध-सेनगणी लिलेख—

१. क्षीरत० पृष्ठ ३, २२३। चुरादौ (पृष्ठ ३०१) द्वितीयं चरणम् 'एकैकोऽर्थो निदर्शितः' इत्येवं पठ्यते, तृतीयचरणं 'प्रयोगतोऽनुमातव्या' इति। श्लोकोऽयं चान्द्रधातुपाठान्तेऽपि पठ्यते। तत्र तृतीयचरणे 'प्रयोगतोऽनुगन्तव्या' इति पाठः।

२. टीकासर्वस्वे इमे धातवः अर्व पर्व इत्येवमन्तस्थान्ताः मुद्रिता। तत्प्रमादिकं मुद्रणमिति सर्वानन्दवचनादेव स्पष्टम्।

इत्यादिकमुत इत्युक्तं पुरस्तात् ।

५—लवपुरस्थदयानन्दमहाविद्यालयान्तर्गते लाल भीमसेनीयधातुपाठस्यैको हस्तलेख आसीत् ।[१]

एतैः प्रमाणैर्भीमसेनस्य धातुपाठेन सह आसी स इति सुव्यक्तं भवति ।

कालः—भीमसेनोऽयं कदा कं च प्रदेशं स्वजनुषा मपि विज्ञायते । भीमसेनस्य यावन्तो निर्देशा विवि ा, तेषु सिद्धसेनगणिनो निर्देशः प्राचीनतमः । सिद्ध क्रमाब्दस्य सप्तमी शती काल इत्येक ऐतिह्यविद ३ नश्चेतोऽपि भूयान् प्राचीनः । इयं हि तस्यावरासीमा त्रं वृकोदरं मन्यन्ते । तद्युक्तमिति पुरा प्रदिष्टम् ।

तुपाठेन सह संबन्धः—भीमसेनस्य ये निर्देशाः प्रा न्ते, तैरेतावत् स्पष्टमवगम्यते यदस्ति भीमसेनस्य ठेन सह कश्चिन्महीयान् संबन्धः । भीमसेननाम्ना र संग्रहालयेषूपलभ्यमानाः केचन धातुपाठकोशा स्य प्रज्ञापकाः । परं धातुपाठेन सह तस्य कीदृश वेवदन्ते वैयाकरणाः । पाणिनीयधातूनामर्थ निर्दे येके ग्रन्थकारा आहुः । मतमिदं प्रमाणविरहित सम्यगुपपादितम् ।

धातुवृत्तिकारः—वयं त्वनुमिनुमो यदयं भीमसेनः ठस्य वृत्तिकार इति । अस्यानुमानस्योपोद्बल स्तः—

१—कविकल्पद्रुमटीकायां दुर्गादास आह—

[illegible]

... स्वधातुवृत्तावेव विवृतं स्यात्, नह
मेदं सम्भवति ।

–दैवव्याख्याता कृष्णलीलाशुकमुनिराह—
मेरणे । भीमसेनेन कथादिष्वपठितोऽप्ययं 'बहुलमेतन्निदर्शनम्
ातुवृत्तौ पठ्यते । पृष्ठ ९५ ।
मेव पाठः स्वल्पभेदेन देवराजीये निघण्टुव्याख्या
ते । पृष्ठ ४३, १०९ ।
दैवव्याख्याने 'धातुवृत्तौ पठ्यते' इत्यस्य कर्त्ता भी
स्यात् (अन्यस्यानिर्देशात्), तर्हि भीमसेनेन काचिद्
ता इति स्पष्टमेव । यद्यत्र 'धातुवृत्तौ पठ्यते' इत्यस
भिप्रेतः स्यात्तदापि पूर्वप्रमाणेन भीमसेनस्य धातुवृ
मेव ।

## ४—अज्ञातनामा

चिदज्ञातनाम्नो वृत्तिकारस्य तदीयाया धातुवृत्तेश्च
ीपुरुषकारनिघण्टुव्याख्यानादिषूपलभ्यन्ते । तथाहि-
क्षीरस्वामी श्रथि शैथिल्ये इति धातुसूत्रव्याख्याने क
स्मार
थे ... ...इदित्वादनुनासिकलोपाभावः । श्रथे इति तूदाहरन् वृ
त० १।२९१॥
द् धातुवृत्तिकारः—क्षीरस्वामिना स्मृतो वृत्ति
रो द्रष्टव्यः । तदुक्तं क्षीरपाठमुद्धरता सायणेन—
रङ्गिणी—इदित्वादनुनासिकलोपाभावात् श्रथे मेथे इत्युदाहरन्
। अत्र वृत्तिकारो धातुवृत्तिकृद् उच्यते । धातुवृत्ति पृष्ठ ४८

मित्यस्योदाहरणत्वेन धातुवृत्तौ पठ्यते ।१।७।२॥ २।१२।२७॥

देवराजस्य द्वितीयः पाठो भीमसेनप्रसङ्ग उद्धृते
न सह संवदति । तेनैतदपि सम्भवति, यद्देवराजः पु
पाठमुदाजहारेति ।

यद्युपरितनेषु प्रमाणेषु स्मृतो धातुवृत्तिकारो
मसेनस्तदीया धातुवृत्तिर्वा न स्यात्तर्हि क्षीरस्वामिन
श्चिद् विदुषा काचिद् धातुवृत्तिर्विहिता इति निः
तुम् ।

## ५—क्षीरस्वामी (११९५—११६५ वि॰

क्षीरस्वामिनाम्ना शब्दशास्त्रनिष्णातेन क्षीरतर
ा धातुवृत्तिर्विरचिता । इयमुपलभ्यमानासु सर्वासु
चीनतमा महत्त्वपूर्णा च वर्तते । एतस्या एकं संस्करण
लिबिशेन १९८७ वैक्रमाब्दे (सन् १९३०) रोमनाक्षरेषु

## परिचयः

वंशः—क्षीरस्वामिना क्षीरतरङ्गिण्याममरकोशो
श्चेत् स्वकीयः परिचयो वृत्तान्तो वा लिखितः । अत
त्तान्तोऽन्धकूप एव निपतितो वर्तते ।

क्षीरतरङ्गिण्या भ्वाद्यदाद्योरन्ते 'भट्टेश्वरस्वामिपु
त्र......' इति पाठदर्शनात् क्षीरस्वामिनः पितुः
मी आसीदिति विज्ञायते ।

शाखा—क्षीरस्वामिना यज-धातुव्याख्याने (१।
इत्युक्तम् । एकशाखाध्येतृभिः यजति काठकस्यैव ना

पण्डितस्य इत्यस्य परिमाणमिदम्...

—क्षीरस्वामी कस्मिन् काले बभूव इति न श
तुम्। तथापि—

एकः खलु क्षीराभिधानः कश्चिच्छाब्दिकः कल्हणेन
मर्यते—

तरादागमय्याथ व्याचक्षाणान् क्षमापतिः।
यद्विच्छिन्नं महाभाष्यं स्वमण्डले ॥
भिधानाच्छब्दविद्योपाध्यायात् सम्भृतश्रुतः।
सह ययौ वृद्धिं स जयापीडपण्डितः ॥ ४।४८८, ४८९॥

मीराधिपतेर्जयापीडस्य राज्यकालः ८०८ वैक्रमाब्दात
गावदालिखन्त ऐतिह्यविदः।

स्वामी तु क्षीरतरङ्गिण्याममरकोशटीकायां च
स्वतीकण्ठाभरणं चासकृदुदाजहार। तस्मादयं क्षी
स्मृतात् क्षीराभिधानाद् विबुधोऽन्य इति विस्पष्टम्
—गणरत्नमहोदधौ स्मृतः—सप्तनवत्युत्तरैकादशशत्यां वि
दधौ वर्धमानो ह्रिः क्षीरस्वामिनं सस्मार। तथाहि-
—ज्योतींषि ग्रहनक्षत्रादीनि वेत्ति ज्यौतिषिकः इति वामनक्षीरस्व
ष्ठ १८३॥

ठान्तरम्—ज्योतींषि ग्रहादीनधिकृत्य कृतो ग्रन्थो ज्योतिषः। ज्य
। द्र० पृष्ठ १८३ टि० २।

नयोः पाठान्तरे न्यस्तः पाठः क्षीरस्वामिनोऽमरको
२।८।१४) सहाक्षरशः संवदति।

—क्षीरस्वामिना मार्ष मारिष इत्यपि, यथा पर्षत्

अनयोरपि पाठान्तरं न्यस्तः पाठः क्षीरस्वामिना
रेष-पदव्याख्याने (१।६।१४) उपलभ्यते।

एतेन इदमपि स्पष्टं, यद् गणरत्नमहोदधेर्योरोपीयं
[तं भारतीयं चोभे अपि संस्करणे भ्रष्टपाठबहुले स्तः।

इयं क्षीरस्वामिनोऽवरा सीमा।

३. क्षीरस्वामी हेमचन्द्राचार्यं तदीयं शब्दानुः
वत् साक्षात् सस्मार, एवं हेमचन्द्राचार्योऽपि क्षी
उपिडतचन्द्रसागरसूरिणा हैमवृत्त्यास्ऽऽनन्दबोधिनीवृ
र्यां त्रिषुस्थानेषु हेमचन्द्राचार्येण 'अन्यः' पदेन स्मृ
स्वामीति प्रतिज्ञातम्।[1] यद्येतत् सूरिमहोदयैः प्राच
रं विवृतं स्यात्तर्हि हेमचन्द्राचार्यतः प्राचीनः क्षीरस्व
ां शक्यते वक्तुम्। हैमव्याकरणस्य रचना ११९३—
बभूवेत्यपि सूरिमहोदयानां मतम्।[2] तदेवं ११९
र्वर्ती क्षीरः।

४—क्षीरतरङ्गिण्याः कोशान्ते पद्यमिदं पठ्यते-

कश्मीरभूभृन्मण्डले जयसिंहनाम्नि, विश्वम्भरापरिवृढे इदर्द
शासत्यमात्यवरसूनुरिमां लिलेख भक्त्या द्रविणवानपि धातु

कश्मीराधिपतेर्जयसिंहस्य कस्यचिद् अमात्यस्य
ङ्गिणी प्रतिलिपिकृतेत्यस्याभिप्रायः।

अत्र स्मृतस्य जयसिंहस्य नृपते राज्यकालः ११८
।९५ वैक्रमाब्दपर्यन्तमासीत्। एतस्मिन्नन्तरे क्षीरतर
पिकरणादितः प्राचीनः क्षीरस्वामीति सुव्यक्तम्।

५—मैत्रेयरक्षितः ११६५ वैक्रमाब्दात् ११९० वै
क्षीयं धातुप्रदीपं विरचयामासेत्यस्माभिर्व्याकरणेति

अत्रस्थाऽस्मदीया टिप्पण्यपि द्रष्टव्या ।
-तुहिर् दुहिर् इत्येके । पृष्ठ ५२ ।
व्या क्षीरतरङ्गिणी १।४८७॥
-अपरे तु वावृतु वरणे इति परिस्मन् वाग्रहणं संबध्य धातुमेक वावृतु वरणे इति वावृत्यते । ततो वावृत्यमाना सा रामशालां
९३॥
। ४।४९ सूत्रस्था क्षीरतरङ्गिणी द्रष्टव्या ।
-प्रीतिचलनयोरित्येके । पृष्ठ १०३ ।
५।१५ सूत्रस्था क्षीरतरङ्गिणी द्रष्टव्या ।
—प्वादयस्त्वागणान्ताः । तेषामपि समाप्त्यर्थमत्र वृत्करणमित्येके ।
त्र ६।२३ सूत्रस्य क्षीरतरङ्गिणी अवलोकनीया ।
—भासार्था इत्येके । भासार्था दीप्त्यर्थाः । पृष्ठ १४४ ।
ष्टव्याऽत्र १०।१९७ सूत्रस्था क्षीरतरङ्गिणी, तत्रस्थ
त्र ।

तैः कतिपयैरुद्धरणैरेतद्व्यक्तं भवति यत् क्षीरस्वामी प्राचीनः । एवं च कृत्वा ११६५ वैक्रमाब्दात् प्राचीन ति तु निश्चितमेव ।

रस्वामिनोऽन्ये ग्रन्थाः—योऽयं जाता विश्वसृजः क्रमेण मुनिभि क्षीरतरङ्गिण्या अमरोद्घाटनस्य चादौ समानरूपेण षड्वृत्तीनामुल्लेखः श्रूयते । ताश्चेमाः षड्वृत्तयः—

. अमरकोशोद्घाटनम्
. क्षीरतरङ्गिणी
. निपाताव्ययोपसर्गवृत्तिः
४. अमृततरङ्गिणी
५. गणवृत्तिः
६. निघण्टुवृत्ति

न्ति केचित प्रतिजानते ।

ण्यां निदर्शितः शब्दः शब्दनम् पाठः साधीयान्। एको
क्षीरतरङ्गिण्याममरकोशोद्घाटने वा क्वचित् स्यात्
शब्दः कोशपर्यायत्वेनापि लोके प्रसिद्धः।[1] अतो दे
ऽपि निघण्टुटीका नाम्ना निर्दिष्टा।

## ६—मैत्रेयरक्षितः (सं० ११६५)

मैत्रेयरक्षितनाम्ना बौद्धविदुषा धातुप्रदीपनाम्न्येव
लध्वी वृत्तिर्विहिता।

### परिचयः

अयं मैत्रेयरक्षितः कस्मिन् काले, कुत्र, कुतश्च ज
ज्ञायते।

**कदाचिद् वाङ्गः**—धातुप्रदीपे बहुत्र धातोर्दन्त्यो
दत्रादिगुणानाम् (६।४।१२६) इति प्रत्यक्षसूत्रेण एत्वा
षेधे प्राप्तेऽपि चन्द्रसम्मत्या एत्वाभ्यासलोपप्रतिषे
।—

१—वज व्रज गतौ (१।२४८,२५०)……एत्वाभ्यासल
रुदाहृतः—ववाज ववजतुः……। पृष्ठ २५।

२—ष्टन वन शब्दे (१।४६०,४६१)……ववान, वव
त्वाभ्यासलोपनिषेधश्चान्द्रैरुदाहृतः। पृष्ठ ३७।

एतेनानुमीयतेऽयं मैत्रेयः कदाचिद् वङ्गदेशीयः व
या हि वबयोरभेदेनोच्चारणात् प्रायेण मुह्यन्ति।

**कालः**—सर्वानन्देनामरटीकासर्वस्वे धातुप्रदीपस्त
ना व्यासकृदुद्धृता। टीक स[illegible]स्वश्च सर्वानन्देन १२

---

१. एतद्विज्ञाय ऋक्सर्वानुक्रमण्याः षड्गुरुशिष्यव्याख्य

।७द् पचरत्नमञ्जुषा... ।

।।—मैत्रेयरक्षितो व्याकरणशास्त्रस्यासामान्यप
स्य तन्त्रप्रदीपनाम्नी न्यासव्याख्या अतिविपुला वे
ते। धातुप्रदीपान्ते स स्वयमाह—

वृत्तिन्यासं समुद्दिश्य कृतवान् ग्रन्थविस्तरम् ।

नाम्नातन्त्रप्रदीपं यो विवृतास्तेन धातवः ॥१॥

प्राकृष्य भाष्यजलधेरथ धातुनामपारायणक्षपणपाणिनिशास्त्रवेदी
कालापचान्द्रमततत्त्वविभागदक्षो धातुप्रदीपमकरोज्जगतो हिताय।
:भाषावृत्तिकृत् सीरदेवोऽप्याह—तस्माद् बोद्धव्योऽयं र
स्तरा एव रचितग्रन्था विद्यन्ते। पृष्ठ ९५।

।। कृतिः—रक्षितस्याऽन्याकृतिः तन्त्रप्रदीपाख्या व
। व्याख्या वर्तते। अनेन महाभाष्यस्यापि काचिद् व
इत्यस्माभिरनेकैः प्रमाणैरनुमितम्। एतद्विषयेऽस
शास्त्र का इतिहास' नामा ग्रन्थो द्रष्टव्यः (पृष्ठ २८५

## धातुप्रदीप-टीका (११९० वै०)

नचिदज्ञातनाम्ना विदुषा धातुप्रदीपस्य काचित् टीका
ये टीका सर्वानन्देन स्वीयेऽमरकोशटीकासर्वस्वे
तेनास्याः कालः १२१६ वैक्रमाब्दात् प्राचीन इति लि
वक्तुम्। अस्माभिरस्याः कालः ११९०–१२१५ वै
मत (द्र० सं० व्या० शास्त्रेतिहास पृष्ठ २८३)।

## ७—दैवम् (१२०० वै०)

यं श्लोकात्मकः प्रकरणग्रन्थो देवनाम्ना केनचिद्
ः। अस्मिन् ग्रन्थेऽनेकत्र पठितानां सरूपाणां धातू

देवनामा विपश्चित् कस्मिन् काले कुत्र चाज
चिदपि विज्ञायते। दैवग्रन्थस्य लघुपाठकेन गणपति
कालः खैस्ताब्दस्य नवमशताब्द्या आरम्भादाद्वादशश
वयं त्वस्य कालः वैक्रमद्वादशशत्या अन्तिमः पाद
तत्रेमौ हेतू—

१—क्षीरस्वामी दैवं न कचित् सस्मार। क्षीरस
वैक्रमाब्दात् ११६५ वैक्रमाब्दं यावत् काल इत्यस्मा

२—दैवव्याख्यात्रा कृष्णलीलाशुकमुनिना
हशनिर्देशः कृतो येनानुमीयते यदयं देवो मैत्रेयरक्षित
तथाहि—

क—देवेन तु 'ष्टि वेष्टने स्तापयति तिष्ठापयति' इति मैत्रे
म्भाम्नायमनुसृतः। पृष्ठ २३।

ख—देवेन तु मैत्रेयरक्षितविस्रम्भादेतदुक्तम्। पृष्ठ २८

यदि कृष्णलीलाशुकमुनेर्लेखः सत्यं स्यात्तर्हि
ताद् औत्तरकालिक इति निश्चितं शक्यते वक्तुम्।
दैवस्य १२०० वैक्रमाब्दः काल इत्येव युक्तम्।

## दैववार्तिकम् (१२५० वै०)

श्रीकृष्णलीलाशुकमुनिना दैवस्य पुरुषकार
लेखि।[१] अस्मिन् ग्रन्थे पाणिनीयेतरव्याकरणसम्प्र
पदे-पदे उद्धरणदर्शनादस्य कर्तुरनेकतन्त्रनिष्ठ
स्फुटं भवति। सायणेनायमस्य ग्रन्थश्च स्वीयधातुवृ
तः। अनेकत्र च सायणो नामनिर्देशं विनैव पुरुष
उद्धरति।[२]

---

१ [illegible]

त्येके मन्यन्ते ।

5:—कृष्णलीलाशुकमुनेः क काल इति नास्ति कश्चि
त्तस्य कालनिर्णयाय यानि सहायकानि प्रमा

—

·पुरुषकारे हेमचन्द्राचार्यः त्रिः स्मर्यते ।[1] हेमचन्द्रस
काल: ११६० वैक्रमाब्दात् १२२० वैक्रमाब्दपर्यन्त
म् । अत इयं पुरुषकारस्य पूर्वा सीमा ।

·निघण्टुव्याख्यात्रा देवराजयज्वना पुरुषकारस्य ना
द्वयोः स्थानयोः पाठ उद्धृतः ।[2] देवराजीयं निघण्टुः
६२।३ ऋग्भाष्य उद्धृतम् ।[3] अतो देवराजस्य वैक्रमा
या उत्तरार्धः (१३५०—१४००) काल इत्यैतिह्यविदः
पुरुषकारस्यावरासीमा ।

·लीलाशुकमुनिः स्वव्याख्याने क्वचिद् दैवस्य पाठान्
ले । दैवस्य कालः १२७० वैक्रमाब्द इत्यनुमितं पुरस्
ठान्तरोत्पत्तावपि कश्चित् काल अपेक्षत एव । स च
शद्वर्षमित आवश्यकः ।

प्रमाणैः सामान्यतयेदमेव शक्यते वक्तुं,यत् पुरुषक
० वैक्रमाब्दात् १३५० वैक्रमाब्दे यावत् कदाचिद् ब
रामजयरामयोर्भ्रान्तिः—'संस्कृत साहित्य का संक्षिप्त
ग्रन्थस्य लेखकाभ्यां सीतारामजयरामाभ्यां कृष्णल
कालः ११५७ वैक्रमाब्दो निर्दिष्टः । स चासमीचीन इत्
ग्रस्पष्टमेव ।

---

पुरुषकार पृष्ठ २२, २४, ३७ ।

क्षप प्रेरणे' इत्यारभ्य 'धातुवृत्तौ पठ्यते' इत्यन्तः । पृष्ठे ४२.

वीयानि। पुरुषकारधृतोद्धरणैः सम्भाव्यते यदिय
ादू व्याख्या स्यादिति।

अन्ये ग्रन्थाः—कृष्णलीलाशुकमुनिना विरचिता
:—

१—सुप्पुरुषकारः—सायणः सुब्धातुव्याख्याने
पाठमेकमुद्धरति—

तदुक्तं पुरुषकारे—बहयतीत्युदाहृत्येष्ठनि यत् दृष्टं कार्यं तदप्य
यिट्, नापीष्ठवद्भावश्च । यिट्सन्नियोगशिष्टत्वात् तदभावे
ात्तैरिति। धातुवृत्ति पृष्ठ ४२८।

नैष पाठो मुद्रिते पुरुषकारे दृश्यते। अतो ज्ञायते
ुनिना कश्चित् सुब्धातुव्याख्यात्मकोऽपि पुरुषकारन
चेत इति।

२—कृष्णलीलामृतम—इदं स्तोत्रम।

३—सरस्वतीकण्ठाभरणव्याख्या—कृष्णलीलाशु
ास्य सरस्वतीकण्ठाभरणनाम्नः शब्दानुशासनस्य
ा व्याख्या विरचिता। एतद्विषयेऽस्मदीयो व्याकर
ोकनीयः।[२]

एतदपि संभाव्यते सायणेन पूर्वनिर्दिष्टः पुरुषका
कण्ठाभरणव्याख्यात उद्धृतः स्यात्।

४—अभिनवकौस्तुभमाला, ५—दाक्षिणामूर्ति
ास्पादकस्य गणपतिशास्त्रिणो मते इमावपि ग्रन्थौ
कमुनेरेव कृती स्तः। अनयोरन्त्यन्ते—'इति कृष्णली

तुमाधवस्य नाम्नाऽनुभवा ...

यं वृत्तिर्वैयाकरणनिकायेऽत्यन्तं प्रसिद्धा वर्तते ।

## संक्षिप्तः परिचयः

यणेन विविधग्रन्थेषु स्वपरिचयो निबद्धः । तदनुसा
गायणः, मातुः श्रीमती, ज्येष्ठभ्रातुर्माधवः, कनिष्ठस्य
ोत् । अस्य तैत्तिरीया शाखा बौधायनं सूत्रम्, भा
भूव । अयं १३७२ वैक्रमाब्दे जन्म लेभे, १४४४ वै
र्षदेशीयः स्वर्जगाम ।

ायण एकत्रिंशद्वर्षवयस्को विजयनगराधिपतेः प्रथमस
पणनाम्नोऽनुजस्य (वै० सं० १४०३—१४१२) मन्त्रप
दनु तत्पुत्रस्य संगमस्य (सं० १४१२—१४२०) शि
च स्वीचकार, तदनन्तरं प्रथमस्य बुक्कनृपतेः (सं०
द्वितीयस्य हरिहरस्य (सं० १४३८—१४४४) चाम
ाह ।[1]

## धातुवृत्तेर्निर्मितिकालः

ातुवृत्तेराद्यन्तयोः पाठेन ज्ञायते यत् सायणेन संग
मलंकुर्वतेयं वृत्तिर्विरचिता । तथाहि—

दौ—अस्ति श्रीसंगमक्ष्मापः पृथिवीतलपुरन्दरः ।
यत्कीर्तिमौक्तिकमादर्शे त्रिलोक्यां प्रतिबिम्बते ॥४॥

न्ते—इति पूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसंगमम
ायणसुतेन माधवसहोदरेण सायणाचार्येण विरचितायां धातुवृत्तौ

ादेवं धातुवृत्ते रचनाकालः १४१५ वैक्रमाब्दात् १४२०

ाजे प्रसिद्धिर्वर्तते । अत एव तन्नाम्ना प्रसिद्धेषु ग्रन्थे
स्परिको विरोधोऽप्युपलभ्यते । सत्येवं माधवीया ।
ये विरचिताऽऽहोस्वित् तत्सहायकेनान्येनैव केनचि
मेता इति सन्देहो जागर्त्येव । धातुवृत्तौ कमु पादविक्षेपे
ख्यानान्ते पठ्यते—

यज्ञनारायणार्येण प्रक्रियेयं प्रपञ्चिता ।
तस्या निःशेषतस्सन्तु बोद्धारो भाष्यपारगाः ॥ ९

एवं मन्थ बन्धने इति सूत्रान्तेऽपि—

अत्रापि शिष्यबोधाय प्रक्रियेयं प्रपञ्चिता ।
यज्ञनारायणार्येण बुध्यतां भाष्यपारगैः ॥ पृष्ठ १

उभयत्र स्मृतो यज्ञनारायणः किं सायणस्यैव
ाहायकस्य धातुवृत्ते रचयितुर्वास्तविकं नामेति सन्दे
ेऽत्र प्रमाणमुपलभ्यते । वयं त्वनुमिनुमो यदयं
ाणस्य सहायको धातुवृत्ते रचयिता स्यात् ।

## धातुवृत्तेर्वैशिष्ट्यम्

माधवीयधातुवृत्तेः प्राचीने क्षीरस्वामिमैत्रेयरक्षि
ये समुपलभ्येते । ते अत्यन्तं संक्षिप्ते स्तः । तयोरपि
ासतरः । तैताभ्यां विद्वांसोऽपि धातुकान्तारावगाहनं
ाधियां तु का कथा । नैव च तयोः प्रतिधातु णिजन्त
णि प्रदृश्यन्ते । माधवीयायां खलु प्रायेण सर्वेषां ध
देप्रक्रियाः संक्षेपतः प्रपञ्च्यन्ते । अपि च सन्दिग्धेषु
मतान्युद्धृत्य निर्णयो विधीयते । यद्यप्यनेकत्र परमत
पा कास्तिन्यमपि समापन्नम्, तथापि कमधियां निरुक्ति

ृयाग्रन्थान्तर्गतानि धातुव्याख्यानानि

ृय द्वादशशत्याः पाणिनीयव्याकरणस्य पठनपाठनं
ामुज्झित्वा प्रक्रियाक्रमेण प्रवृत्तम् । प्रक्रियाग्रन्थका-
तत्रैवान्तर्भावः कृतः । ते चेमे ग्रन्था ग्रन्थकाराश्च—

| | | |
|---|---|---|
| | धर्मकीर्तिः | ११४० वै० |
| ाम् | | १३०० वैक्रमाब्दात्पूर्वः |
| | विमलसरस्वती | १४०० वैक्रमाब्दात्पूर्वः |
| ुदी | रामचन्द्रः | १४८० वै० |
| ुदी | भट्टोजिदीक्षितः | १५७५ वै० |
| स्वम् | नारायणभट्टः | १६२० वै० |

र्थेषु नैव सर्वे धातवो विव्रियन्ते, नापि व्याख्यात-
ादिसर्वप्रक्रियासु रूपाणि प्रदर्श्यन्ते । उत्तरयोर्ग्रन्थ-
तवो व्याख्याताः तथापि शुद्धकर्तृप्रक्रियां विहाय
ां रूपाणि नोच्यन्ते । णिजन्तादिप्रक्रियाप्रदर्शनाय
ां रूपाणि निदर्श्यन्ते । नैतेषु किञ्चिद्वैशिष्ट्यं वर्तते ।
ानां ग्रन्थकर्तां तद्व्याख्याकर्तां च कालादिविषये-
ा व्याकरण शास्त्र का इतिहास' नाम्नो ग्रन्थस्य पो-
७५–३९४) विस्तरेण प्रत्यपादीति नेह पुनः प्रपञ्च्यते।
पाणिनीयधातुपाठस्य तद्व्याख्याग्रन्थानां च विषय
ः। पाणिनेः पूर्ववर्तिनामापिशल-काशकृत्स्नादीनाम्,
ञ कातन्त्र-चान्द्र-जैनेन्द्र-अभिनवशाकटायन-हैम-
ातुपाठविषये तद्वृत्त्यादिविषये च विस्तरभिया न
ेषां विषये 'संस्कृत व्याकरण शास्त्र का इतिहास'
ाम्नो विस्तरेण प्रतिपादयिष्यते ।

पाणिनीयधातुपाठस्य उपलभ्यमानासु व्याख्यासु
क्षीरतरङ्गिणी प्राचीनतमा वर्तते । ब्रूनो-लिबिशनाम
ाऽस्याः प्रथमं संस्करणम् ऋषिवस्वङ्कचन्द्रमिते
ाब्दे (=१९३० ईसवीये) प्रकाशितम् । अस्मिन् संस्
ाणां प्रयोगात्, भूमिकायां टिप्पण्यां च
ावहाराच्चेदं भारतीयानां संस्कृतविदुषां कृते लाभ
ावुपलब्धिकालादेवास्माकीना मतिरस्य ग्रन्थस्य
ानस्याजायत । तदनु द्वितीये विश्वमहायुद्धे तदि
तां गतमिति कृत्वा तत्प्रकाशनस्य महतीमावश्यकता
अस्मदाचार्यवर्याणां पण्डितब्रह्मदत्तजिज्ञासूनां
ानन्दाश्रमे विद्यामधीयानेन वर्णिना वाचस्पतिना
ृत्य १९९८ वैक्रमाब्देऽस्य ग्रन्थस्य नागराक्षरेषु प्रतिलि
चित् कारणेन सोऽर्धादेर्मध्यं यावत् प्रतिलिपिं कृत
ु भारतदेशविभागानन्तरं काशीमागत्य२००९ वैक्रमा
स्माभिः स्वयमकारि । तस्मिन्नेव काले काश्या राज
विद्यालयेऽधीयानेन पण्डितरामशंकरभट्टाचार्येणा
ास्य नागराक्षरेषु प्रतिलिपिर्विहिता । भट्टाचार्यो
ाशनायापि संचक्लृपे, परं फालार्थ्ये नाभजत । २०
ामलालकपूरनिक्षेपसंस्थाधिकारिभिरस्य ग्रन्थस्य
ारकारि । बहुकार्यव्यग्रतया मयाऽस्य ग्रन्थस्य सम्पा
रभट्टाचार्यस्य साहाय्यमग्राहि । किञ्चित् कालानन्त
न्यकार्यजातमुररीकृत्यास्मात् कार्यात् प्रायेणोपरराम
स्थ्यवैकल्यात् काशीं परित्यज्य देहलीं प्रत्यायातः
ेस्य लभ्यमानं साहाय्यमप्यनश्यत् । मयैव सक

। विदुषा लिबिशेन रोमनाक्षरसंस्करणं महता परि
म्, तथापि तस्य पाणिनीये व्याकरणे सम्यक्प्रवेशा
दीयाः सम्पादनप्रमादा उपलभ्यन्ते । अस्माभिस्तद
रिमार्जनाय, संस्कृतविदुषां सौकर्याय, उपलब्धिसौलभ
ायपरिरक्षणाय च विविधग्रन्थसाहाय्येनेदं संस्क
अत्र यद्यद् वैशिष्ट्यमस्माभिः सम्पादितं तदित्थम्—

धातुसूत्रसंख्यानिर्देशः—धातुपाठे 'भू सत्तायाम्' 'एध
। वाक्यानि क्षीरस्वाम्यादीनां पूर्वाचार्याणां मते सूत्रा
पृष्ठ २, पं० २, टि०२; पृष्ठ १ पं० ११) । अतोऽत्रापि पा
प्रतिधातुसूत्रमादौ सूत्रसंख्या निर्दिष्टा । यथा—
भू सत्तायाम्, २. उदात्तः (पृष्ठ २), ३. एध वृद्धौ (पृष्ठ
(पृष्ठ १२) इत्यादिषु ।

ातुसंख्यानिर्देशः—कस्मिन् प्रकरणे कियन्तो ध
य, प्रतिगणं धातुसंख्यावच्छेदाय च प्रतिसूत्रव्याः
क्रमं धातुसंख्याया निर्देशोऽप्यकारि ।

लेबिशोपात्तधातुसंख्यापरित्यागः—लिबिशेन स
ट्लिङ्गसम्पादितधातुपाठानुसारं तत्तद्धातुसंख्यानि
ीरतरङ्गिण्यां तत्रस्थानां बहूनां धातूनामभावात् क
तदीयधातुसंख्यानिर्देशस्यानुपयोगितामवेक्ष्य तन्नि
परित्यज्यास्माभिर्मूलग्रन्थानुसारिणी धातुसंख्या प्रद
न्यैरुद्धृतानां क्षीरतरङ्गिणीपाठानां स्थाननिर्देश
ा यान्युद्धरणानि पुरुषकारे धातुवृत्तावन्यत्र चोपलभ्य

शोऽकारि। यथा—पृष्ठ २८, टि० ३, ९; पृष्ठ २२, टि० ६; पृष्ठ २३, टि० २, एवं सर्वत्र।

अत्र विट्ठलाचार्यकृतायां प्रक्रियाकौमुदीव्याख्यायामुद्धृतानां स्मृतानां वा पाठानामल्पीयानेव संग्रहोऽभूत्, तद्ग्रन्थस्यास्मत्सकाशेऽभावात्।

५—अन्यत्रोद्धृतपाठभेदनिर्देशः—यत्रान्यत्रोद्धृतः क्षीरतरङ्गिणीपाठः सर्वथैव भिन्न आसीत्, यद्वा क्षीरस्वामिनाम्ना क्षीरतरङ्गिणीनाम्ना वोद्धृतः पाठोऽत्र नोपलब्धः, तादृशपाठानां निर्देशष्टिप्पण्यामस्माभिर्विहितः। यथा—पृष्ठ १४, टि० ६; २५, ८; ३८, ३; ४३, ३; ४८, ५; ६६, ७; १११, ७; ११७, ६; १५८, १; २००, ७; २२८, १; २३७, ४; २४६, ३; २५५, ३; २७१, १; २७४, १; २७६, ५; २८१, २, ६; २८३, ३; २८४, १; २६१, ६; २६५, १-२; २६६, २; २६८, १-२; २६६, ७; ३००, ४-५; ३०१, ४; ३०२, ४-५; ३०८, २; ३११, २॥

६—मूलपाठसंशोधनम्— पुरुषकारादिषूद्धृतपाठसाहाय्येन यत्र तत्र जर्मनसंस्करणे मुद्रितानामपपाठानां संशोधनं कृत्वा तेषां टिप्पण्यां संकेतो विहितः। एतद्विषयका इमाष्टिप्पण्योऽवलोकनीयाः—पृष्ठ ६, टि० १; २४, २, १४३, ५; २३१, १ इत्यादयः।

७—मूलपाठशोधप्रदर्शनम्—यत्र मूलपाठशोधनाय न किञ्चित् साक्षात् साधनमुपलब्धं, तत्रापपाठानां स्थाने साधुपाठाभ्यूहष्टिप्पण्यां प्रदर्शितः। यथा—

पृष्ठ ५, टि० १; ८८, ४; ६०, ६; ११५, १; १५४, ३; १६६, ७; १७१, १; १७२, ३-४; १७४, १; १६६, २; २०१, १; २०५, ४; २२८, २; २३६, ५; २७५, १; २८०, २; २८८, १; २९२, ३; ३०५, १; ३०७, ४; ३०६, ३; ३११, २; ३२१, ३॥

८—त्रुटितपाठपूर्तिः—यत्र क्वचित् क्षीरतरङ्गिण्यां पाठस्त्रुटित आसीत् तस्य [ ] कोष्ठे पूर्तिं विधाय टिप्पण्यां तन्निर्देशः कृतः। यथा—पृष्ठ ११७, टि० २; १२२, १ इत्यादिषु।

९—भ्रष्टपाठ-संकेतः—यत्र यत्र क्षीरतरङ्गिण्यामस्माभिः पाठभ्रंशो विज्ञातः, तस्य सर्वस्य संकेतष्टिप्पण्यां विहितः। यथा—पृष्ठ ७०,

टि०२. ७; २०६, २; २५०, १-२; २६१, ३; २६५, ३; २७३, ५; २८६, ४; ३०४, १; ३०६, ५; ३१०, ४ इत्यादिषु ।

१०—पाठतुलना—बहुत्रास्माभिः क्षीरस्वामिनोद्धृतानां पाठानामन्यग्रन्थैः सह तुलनाऽकारि । यथा—पृष्ठ ३, टि० ७; पृष्ठ ८ टि० ४ इत्यादिषु ।

११—उद्धरणानामाकर-ग्रन्थनिर्देशः—लिबिशेन येषामुद्धरणानामाकरग्रन्थनिर्देशः स्वीये संस्करणे न कृतः, तेषु बहूनां मूलस्थानमुपलभ्य तत्र तत्र निर्देशोऽकारि । अत्र इमाष्टिप्पण्योऽवलोकनीयाः—

पृष्ठ १४८,टि०१; १६५, १;१६६, ३; १६६, ६; १७३, ४; २०५, ५; २०६, १; २७४, ३; २८२, २ इत्यादयः ।

क्वचित् टिप्पणीं विनाऽपि निर्देशोऽकारि। यथा-पृष्ठ ८,पं० ३ ।

१२—युक्ताऽऽकरनिर्देशः—लिबिशेन बहुत्रोद्धरणानां वास्तविकमाकरस्थानमपरिज्ञाय तत्सदृशपाठतुलनायै स्थाननिर्देशः कृतः । तादृशेषु बहूनामुद्धरणानामस्माभिर्मूलमाकरस्थानमुपलभ्य तन्निर्देशो विहितः। दशपाद्युणादिसूत्रनिर्देशः सर्वोऽप्येतादृश एव । तदतिरिक्तेष्वपि बहुषु अस्मन्निर्दिष्टो युक्ताऽऽकरनिर्देशो द्रष्टव्यः ।

१३—आकरनिर्देशे लिबिशभ्रान्तिनिराकरणम्—पाणिनीयव्याकरणस्य सम्यक् परिचयाभावात् लिबिशोऽनेकत्रोद्धरणनिर्देशे परिभ्रान्तः । अस्माभिः सर्वत्रैव तादृशस्थलेषु तद्भ्रान्तिः परिहृता। अत्रैताष्टिप्पण्योऽवलोक्याः—

पृष्ठ २६, टि० ६; ११७, ४; १२८, ३; १२६, १; १३६,१; १४०,६; १५०, ३-४; १५६, ३; १६०, २; १६१, २. ५; १६२, ६; १६५, २; १७३, ३; १७७, २; १७८, ३; १८२, ४; १८६, ३; १६६, १; १६८, ४; २००, ४; २०२, ६; २०४, ४; २०५, १-३; २१७, १; २२५, १; २२८, ५; २३३, ३; २३४, २; २३६, ४-५; २४१, ३; २४४, १; २४६, २; २५०, २; २५४, ५; २७३, ३; २८५, १-२; २८७, ५; ३०६, ६; ३१३, ३ इत्यादयः ।

१४—धातुसूत्रव्याख्याभ्रमनिराकरणम्— क्षीरस्वाम्यादिभिर्बहुत्र धातुसूत्राण्यशुद्धानि व्याख्यातानि । तेषां टिप्पण्यां परिमार्जनं विहितम् । यथा—पृष्ठ ८, टि० ५; १८८, ४ इत्यादिषु ।

१५—क्षीरस्वाम्यभिप्रायनिदर्शनम्—अनेकत्र टिप्पण्यां क्षीरस्वामिनोऽस्पष्टोऽभिप्रायो व्यक्तीकृतः। यथा—पृष्ठ १,टि०२. ४; ६, ६; ५६, ७; १७७, १; २१२, २; २१७, १; २२०, ३; २२६, ७; २३४, १; २५६, १ इत्यादिषु।

१६—क्षीरभ्रान्तिप्रदर्शनम्—क्षीरस्वामिना बहुत्र भ्रान्त्याऽन्यथा धातुरूपप्रतिपादनं कृतम्, सूत्रनिर्देशो वा विहितः। तादृशीनां यथासम्भवं सर्वासां भ्रान्तीनां परिहारष्टिप्पण्यां विहितः। यथा—पृष्ठ ६१, टि०४; ७१, १; ७५, २; ८५, २-३; १३५, ५; १८२, ३; १८३, ३; १८४, २; २०५, ३; २२८, ४; २३५, २; २३७, ५; २३८, ३; २४०, ३; २४५, ४; २४८, ४; २५१, ३; २६३, १; ३१२, २ इत्यादिषु।

१७—स्वयमपठितधातूनां निर्देशः—क्षीरस्वामी कञ्चिद् धातुं व्याचक्षाणः तस्य तत्सदृशस्य वाऽन्यगणपठितस्य धातोर्निर्देशं करोति। तादृशनिर्देशे क्षीरस्वामिना बहुत्र तेषामपि धातूनां निर्देशः कृतो यान् स स्वयं तत्तद्गणेषु न पपाठ। अस्या भ्रान्तेरपि यथास्थानं टिप्पण्यां निर्देशोऽकारि। यथा—पृष्ठ ८६, टि० २; ११७, ५; २१२, १; २२३, १; २६७, १; २८५, १; ३०७, ३; ३१३, २ इत्यादिषु।

१८—सायणेन मुधैव निर्दिष्टानां क्षीरमतानां निर्देशः—सायणेन स्वकीयायां धातुवृत्तौ क्षीरस्वामिनाम्ना क्षीरतरङ्गिणीनाम्ना वा बहूनि क्षीरतरङ्गिणीविपरीतानि मतान्युद्धृतानि, तानि टिप्पण्यामस्माभिर्यथास्थानमालोचितानि। यथा—पृष्ठ ३६, टि० २; ४०, ५; ६६, ५; १६८, ५ इत्यादिषु।

१९—क्षीरस्वामिवचनाभिप्राये सायणभ्रान्तिः—क्वचित् सायणः क्षीरस्वामिवचनाभिप्रायेऽपि भ्रान्तः। तादृशभ्रान्तेरपि टिप्पण्यां निर्देशो विहितः। यथा—पृष्ठ १८२, टि० २।

२०—धातु-पाठालोचनम्—बहुत्र टिप्पण्यामस्माभिर्धातूनां पाठास्यालोचनाऽपि व्यधायि। यथा—पृष्ठ ३२,टि०३; ३३,५; ८७, ३; ८८, ४; १३०, ३; १३६, २; १६३, १; १६५, ४; २२६, ५; २३०, १; २४४, ४; २६१, २; ३०६, १ इत्यादिषु।

७०. वकि कौटिल्ये । वङ्कते । वङ्कः । वङ्कचादौ (द्र०उ०४।६६) वङ्किः, पर्शुः[1] । वक्रम् वञ्चेरक्[2] (द्र० उ० २। १३) वङ्केस्त्व-युक्तम्[3] ॥८६॥

७१. मकि मण्डने । मङ्कते[4] । मङ्कनः, मङ्कना वस्त्रम् । उणादौ (उ० १।४०) मकुरः[5] ॥८७॥

७२. कक लौल्ये । लौल्यं सतृष्णत्वं[6] चापल्यञ्च । ककते । काकः पृषोदरादिः (द्र० ६।३।१०९) ॥८८॥

७३. कुक वृक आदाने[7] । कोकते । के (द्र० ३।१।१३५) कुकः केकरः[8] । संज्ञायां कोकश्चक्रवाकः । उणादौ (द्र० १ । ५४) कोकिलः । वर्कते । वृकः । णौ चङ्युपधाया ह्रस्वः (७ । ४ । १) उर्ऋत् (७ । ४ । ७) वा[9] अवीवृकत्, अववर्कत् । उणादौ[10] वर्करः ॥८९-९०॥

७४. चक तृप्तौ[11] । चकते । चकितः । कठिचकिभ्यामोरः (दश० उ० ८।२९ ) चकोरः । चकिरम्योरुच्चोपधायाः ( उ० २।१४ ) चुक्रम्[12] । चक तृप्तौ प्रतिघाते च ( १।५२९ ) इति घटादौ मित्—चकयति ॥९१॥

---

१. हस्तलेखेषु 'पशुः' इत्येव पठ्यते ।

२. नेदमुणादिसूत्रम्, अपि तु प्रकृतिप्रत्ययनिदर्शनमात्रम् ।

३. इदित्वादनुनासिकलोपाप्राप्तेः ।

४. इतोऽग्रे 'मङ्कः' इति क्वचिदधिकं पठ्यते ।

५. अमरटीकायां क्षीरस्वामी 'मुकुर' इति पठति । तथा चाह प्रक्रियासर्वस्व-कारः—'अकारं मुकुरस्यादावुकारं दर्दुरस्य च । बभाण पाणिनिस्तौ तु व्यत्ययेनाह भोजराट् ॥ (प्रक्रियासर्वस्व उणादिप्रकरण १।४०) ।

६. 'गर्वः' पाठा० । ७. 'अदने' पाठा० ।

८. (द्र० अमरटीका २।६।४९) 'ऐंचाताना' इति लोके प्रसिद्धः ।

९. वेति न सूत्रावयवः, जिघ्रतेर्वा (७।४।६) इत्यतो वेत्यनुवर्तते ।

१०. उज्ज्वलदत्तेन 'ऋच्छेररः' (उ० १।१३१) सूत्रे बाहुलकाद् मन्दरवर्करा-दिशब्दाः साधिताः । ११. इदं सायणेनोद्धृतम् (धा० वृ० पृष्ठ ५६) ।

१२. चुक्रोऽम्लव्यञ्जनम् इत्यमरटीकायां (पृष्ठ २४९) क्षीरस्वामी ।

७५. ककि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ रघि लघि गत्यर्थाः । कङ्कते । कङ्कः । श्वङ्किस्तालव्यादिः । ढौकते, अडुढौकत । टौकृ इति दुर्गः—टौकते । ष्वष्कते । सुब्धातुष्ठिवुष्व-ष्कीनाम् प्रतिषेधात्[1] सत्वाभावः । टेकते । टीकते, अटिटीकत । रङ्घते । बाहुलकात् रघुः । लङ्घते । लङ्घिबंह्योर्नलोपश्च (उ० १।२९) इति लघु । चुरादौ भासार्थौ (१०।१९७) रङ्घयति लङ्घयति ॥९२–१०३॥

७६. लघि भोजननिवृत्तौ च । चाद् गत्यर्थः—नवज्वरो लङ्घनीयः ॥१०४॥

७७. अघि वघि मघि गत्याक्षेपे । गत्याक्षेपो वेगगतिर्गमनारम्भो वा[2] । अङ्घते । उणादावघम्[3], वङ्क्रयादौ (द्र० उ० ४।६६) अङ्घ्रिरित्येके ॥१०५–१०७॥

७८. मघि कैतवे च । कैतवं व्याजः । मङ्घते । श्वनुक्षन्[4] (उ० १।१५९) इति मघवन् मघवा[5] इन्द्रः ॥१०८॥

७९. राघृ लाघृ द्राघृ ध्राघृ[6] सामर्थ्ये । राघते, लाघते । निष्ठायामनुपसर्गात् फुल्लक्षीब (८।२।५५) इत्युल्लाघः नीरुक्, [ अन्यत्र ] उल्लाघित इति स्यात् । द्राघिमन्ये न पेठुः ॥१०९—११२॥

---

१. 'सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः' इति महाभाष्ये (६।१।६४) पठ्यते ।

२. 'गतौ गमनारम्भे चेति स्वामी' इति धातुवृत्तौ (पृष्ठ ५७) पाठः ।

३. स्वामिनामरटीकायां (पृष्ठ ३६) 'न जहाति-अघम्' इति व्याख्यातम् ।

४. उणादिषु 'श्वन्नुक्षन्' इत्यपि पठ्यते । अयमेव च युक्तः पाठः । ङमो ह्रस्वादचि (८।३।३२) इति नुटो नित्यत्वात् ।

५. मघवन् नान्तस्यैव 'मघवा' पदम् इति ज्ञापनाय प्रातिपदिकस्यापि निर्देशः । मघवान् इति तु मतुबन्तस्य भवति ।

६. क्षीरस्वामिना चास्य रूपाणि न निर्दिष्टानि । सायणः 'धाघृ तवर्गचतुर्थादिमपि केचित् पठन्ति' (धा० वृ० पृष्ठ ५७) इत्युक्तवान्, न तु स्वामीति ।

८०. द्राघृ आयासे च । आयासः कदर्थनम्[1] । कौशिकस्त्वायामे, दैर्घ्यविशिष्टायां क्रियायामित्याख्यत्[1] । काल्पनिके हि प्रकृति-प्रत्ययविभागे द्राघिमादयः कस्मिंश्चिद् व्याकरणे धातोरेव[2] साधिताः, एवम् नेदिष्ठादयो नेदत्यादेः[3] । द्राघते, अदद्राघत् ॥११३॥

८१. श्लाघृ कत्थने । कत्थनमुत्कर्षाख्यानम् । श्लाघह्नुङ्स्था (१।४।३४) इति सम्प्रदानम्—चैत्राय श्लाघते । अशश्लाघत् ॥११४॥

८२. उदात्ता अनुदात्तेतः ॥

[सेटः परस्मैपदिनः]

८३. फक्क नीचैर्गतौ । नीचैर्गतिर्मन्दगमनम्, असद्व्यवहारो वा । इतः शिष्यन्ताः (१।९६) पञ्चचत्वारिंशत् सेटः परस्मैपदिनश्च ।

---

१. उद्धृतमिदं धातुवृत्तौ (पृष्ठ ५७) प्रौढमनोरमायां (पृष्ठ ५५८) च ।

२. 'धातुष्वेव' पाठा० ।

३. नामानि सर्वाणि धातुजानीति नैरुक्तानां प्राचां वैयाकरणानां च मतम् । औत्तरकालिकैस्तु वैयाकरणैरुत्तरोत्तरं नाम्नां धातुजत्वं विहाय तद्धितान्तत्वं स्वीकृतम् । यथा गोमयपदस्य 'गोम उपलेपने' इति चौरादिकाद् (१०।२६१) धातोर्निष्पत्तौ सम्यगर्थसिद्धौ सत्यामपि 'गोश्च पुरीषे' (४।३।१४५) इत्यनेन गोप्रातिपदिकान् निष्पत्तिरुक्ता, तथा सति माहिषगोमये लक्षणा कर्तव्या भवति (धातुजत्वे तु न लक्षणाया आवश्यकता) । एवं वध्यशब्दस्य कृदन्तत्वेऽपि वार्तिककारेण 'तद्धितो वा' (महा० ३।१।९७ वा०) इत्यनेन तद्धितान्तत्वमपि प्रतिपादितम् । अपि च 'होमी' पदं पाणिनीयलक्षणेन होमोऽस्यास्तीत्येवं तद्धितान्तं प्रतीयते, परन्तु यास्केन 'सन्त्यल्पप्रयोगाः कृतोऽप्यैकपदिकाः, यथा……… दर्वी होमी' ( नि० १।१४) इत्यस्मिन् वाक्ये कृदन्तत्व प्रतिपादितम् । अपि च काशकृत्स्नधातुपाठस्य कन्नडटीकायां कांचित् प्राचीनां टीकामश्रित्य बहूनां तद्धितप्रत्ययान्तत्वेन मन्यमानानां पदानां कृदन्तत्वं प्रतिपादितम् । यथा—द्युत धातोः द्योतनं द्योतनीयं द्युत्यं <u>द्यौत्यम्</u> (पृष्ठ १३०) एवं रुचधातोः <u>रौच्यम्</u> (पृष्ठ १३०) मिदेः मेद्यं <u>मैद्यम्</u> ( पृष्ठ १३१ ) क्षुदेः क्षुद्यं, <u>क्षौद्यम्</u>, रुदेः रोद्यं <u>रौद्यम्</u> (पृष्ठ १३१) चोरयतेः <u>चौर्यम्</u> (पृष्ठ २५२) । इत्थमेव कस्मिंश्चित् प्राचीने व्याकरणे द्राघिमादयो द्राघतेः, नेदिष्ठादयश्च नेदत्यादेर्निरुक्ताः स्युः । यथायथा हि लोके यौगिकार्थपरिज्ञानशक्तेरभावः संजातस्तथातथा शब्दा रूढत्वमापन्नाः ।

फक्कति । फक्किता । फक्कितम् निगीर्णम् । फक्का, फक्किका[1] ॥११५॥

८४. तक हसने । सहन इति दुर्गः[2] । तकति ॥११६॥

८५. तकि कृच्छ्रजीवने । आतङ्कति । आतङ्कः ॥११७॥

८६ शुक गतौ । शोकति । के (द्र० ३ । ३ । १२५) शुकः[3] । उणादौ (२।२८) शुक्रशुक्लौ ॥११८॥

८७ बुक्क भाषणे । भषण इत्येके[4] । बुक्कति, श्वा । बुक्का सुगन्धद्रव्यपिष्टम्[5] ॥११९॥

८८. खर्ख हसने । खर्खति । खर्खा भगास्यम् । खक्खेति दुर्गः । खक्खटो दृढः ॥१२०॥

८९. ओखृ राखृ लाखृ द्राखृ ध्राखृ शोषणालमर्थयोः । ओखति । एङि पररूपम् [६।१।९४] प्रोखति । ओखाञ्चकार । उवोखेति

---

अत एव पाणिनिना यौगिकत्वेन प्रतिज्ञाता पाचकयाजकादयः शब्दा अप्युत्तरकाले रूढत्वेन स्वीकृताः । अतएव च कातन्त्रीयकृद्व्याख्यानारम्भे दुर्गसिंहेनोक्तम्— "वृक्षादिवदमी रूढा कृतिना न कृता कृतः । कात्यायनेन ते सृष्टा विबुद्धिप्रतिपत्तये" ॥ इति ॥

१. इदं क्वचिन्न ।

२. पुरुषकारे (पृष्ठ ४७) तु "क्षीरस्वामी सहन इत्युक्त्वा हसन इति दुर्गः" इत्येवं विपरीतमुद्धृतम् ।

३. अत्राह सायणः— अस्मिन् (शुक धातौ) हि सति शुकवल्कोल्काः (उ० ३।४२) इति शुभेः कनि भलोपे शुकशब्दनिपातनमनर्थकं स्यात्, इगुपधलक्षणेन कप्रत्ययेनैव सिद्धत्वात्, तथा शुकेरग्विधानेनापि शुक्र शब्दसिद्धे ऋज्रेन्द्रादौ शुचेर्निपातनमनर्थकं स्यादित्यस्य पाठोऽनार्ष इव प्रतीयत' इति । यद्युणादिपदसिद्धिं प्रमाणीकृत्य धातूनामनार्षत्ववचनं युक्तं स्यात्तर्हि बहुनामविगीतत्वेन पठितानां सायणेन स्वीकृतानां च धातूनामनार्षत्वं सिध्येत । एवमेव सर्वैः प्राचीनैः पाणिनीयैरितरैश्च वैयाकरणैरविगीतत्वेन स्वादौ पठितस्य कृञः सायणेन प्रत्याख्यानं कृतम् (एतद्विषये तत्प्रकरण एव विस्तरेण वक्ष्यते) । तस्माच्चिन्त्योऽयं पन्थाः ।

४. इदं पुरुषकारे (पृष्ठ ४६) उद्धृतम् । ५. क्वचिन्न ।

भ्रान्तः[1] । मा भवान् ओचिखत्[2] । ऋदित्त्वादेवौदित्त्वं नास्ति साहचर्यात्[3] ॥१२१–१२५॥

९०. **शाखृ श्लाखृ व्याप्तौ** । शाखति, अशशाखत् । शाखा । शाखोटो[4] वृक्षः ॥१२६, १२७॥

९१. **उख उखि वख वखि मख मखि नख णख णखि रख रखि लख लखि इख ईखि वल्ग रगि लगि अगि वगि मगि तगि त्वगि श्रगि श्लगि इगि रिगि लिगि गत्यर्थाः** । ओखति, प्रोखति । उखा स्थाली । उखिरिदन्तोऽनार्षः, न्यूङ्खा ओङ्काराः षोडशेत्याद्यर्थमुक्तः[5] । मखति । मखः । मङ्खति । मङ्खो बन्दी । द्विर्नखिर् णोपदेशविकल्पार्थः—प्रनखति, प्रणखति । रखति । इदनुबन्धत्वाद् रङ्खतीत्येके । प्रेङ्खति । प्रेङ्खा । वल्गति । वल्गः, वल्गा । रङ्गति । रङ्गः । लङ्गति । लङ्गः खञ्जने पक्षिविशेषेऽयं रूढः । लङ्गिकम्प्योरुपतापशरीरविकारयोः (६।४।२४ वा०) नलोपाद् विलगितः पशुः । अङ्गति । अङ्गम् । अङ्गेर्नलोपश्च (उ० ४।५०) इत्यग्निः । अङ्गिमदिमन्दिभ्य आरन् (उ० ३।१३४) अङ्गारः । ऋतन्यञ्जि (उ० ४।२) इत्यङ्गुलिः । अङ्गेर्गुरिरश्च लो वा (द्र० उ० १।४५) इति व्युत्पत्त्यन्तरेण निरूढादीनां प्रकृतिप्रत्ययौ यथाकथंचित् कल्पनीयौ इति ज्ञाप्यते[6] ।

---

१. कोऽत्र भ्रान्त इति न ज्ञायते । इजादिगुरुमत्त्वादामा भवितव्यम् ।

२. 'ओखिखत्' पाठा० । अयं चापपाठः ।

३. ऋकारौकारयोरित्त्वेऽनर्थको धातुः स्यात् ।

४. 'शाखोटकः' पाठा० ।

५. द्र० काशिका १।२।३४ ॥ षोडश न्यूङ्खसंज्ञका ओकारा आश्वलायनश्रौतसूत्रे (७।११) व्याख्याताः । ते तत्रैव द्रष्टव्याः । कथमुखिरनार्ष इति तु न व्यक्तीकृतं स्वामिना ।

६. उणादौ निरूढानामेव शब्दानां स्वरवर्णानुपूर्विज्ञानार्थं व्युत्पादनमित्याधुनिकानां वैयाकरणानां मतम् । स्वामिदयानन्दसरस्वती तु स्वोणादिकोशव्याख्यायां प्रतिपदं यौगिकार्थं रूढार्थं च प्रदर्शितवान् । तेन तन्मत उणादौ न केवलं निरूढपदानामेव व्युत्पादनम् । नैगमरूढिभवं हि सुसाधु, नैगमा रूढिभवाश्च कथं साधवः स्युरिति वदता महाभाष्यकारेण उणादौ न केवलं रूढानामेव व्युत्पादनमपि तु नैगमाना-

वङ्गिर्गतिवैकल्ये रूढः—वङ्गति, वङ्गः । मङ्गेरलच् (दश० उ० ८।१२३) मङ्गलम् तगिः स्खलने रूढः—तङ्गति । इङ्गिः, इङ्गितम् । आलिङ्गति, लिङ्गम् । चुरादौ लिगि चित्रीकरणे (१०।१८९)—लिङ्गयति । द्रमिडानाम् रिखि-रपि[1]—रिङ्खति, रिङ्खणम् स्खलनम्[2] । त्रगीति च चन्द्रः (च० धा० १।३८) त्रङ्गति ॥१२८-१५५॥

९२. त्वगि कम्पने च । त्वङ्गति ॥

९३. युगि जुगि वुगि[3] वर्जने । युङ्गति । जुङ्गति । जोङ्गनी सुवर्णकारभाण्डम् । भुगि भर्जन इत्येके ॥१५६-१५८॥

९४. दघि पालने च । चकाराद् वर्जने च—दङ्घति ॥१५९॥

९५. घग्घ हसने । घग्घति । घग्घरी कलशी[4] । गादिरित्येके—गग्घति । कण्ठो द्वावप्याह ॥१६०॥

९६. शिघि आघ्राणे । आघ्राणं गन्धोपादानम् । शिङ्घति । श्याणको लूशिङ्घिधाञ्भ्यः (द० उ० ३।२७) शिङ्घाणकः पीनसः[5] ॥१६१॥[6]

९७. उदात्ता उदात्तेतः ॥

---

[ सेट आत्मनेपदिनः ]

९८. वर्च दीप्तौ । इत ईजान्ता (१।११२) विंशतिः, सेटः आत्मनेपदिनश्च । वर्चते, वर्चिता । सुवर्चिका टङ्कनम्, सुवर्चला शाकम् । असुन् (द० उ० ९।४९) वर्चः—अशुचितेजसी ॥

९९. षच सेचने । सचते, असीषिचत् । सितनिगमिमसिसच्यविधाञ्कुशिभ्यस्तुन् (द० उ० १।६९) इति तुन्—सक्तवः । षच समवाये (धा० सू० १।२८५ व्याख्या)

---

मपि, ते च नैगमा यौगिका एव, न रूढा इत्युभयमपि प्रतिपादितम् । अत्र विशेषोऽस्मत्सं-पादितायां दशपाद्युणादिवृत्तेरुपोद्घाते (पृष्ठ २०,२१) द्रष्टव्यः ।

१. 'द्रमिडास्तु रिखमपि पठन्ति' इति सायण आह (धा० वृ० पृष्ठ ५९) ।

२. 'लेखनम्' पाठा० ।

३. 'वुगि' इति मैत्रेयसायणादयः ।

४. 'कलशिः' पाठा० ।

५. प्रतिश्यायस्तु पीनस इत्यमरः (२।७।५१)

६. पूर्वप्रघट्टकान्त्यायां ११४ धातुसंख्यायामेतत्प्रघट्टकस्य ८२ सूत्रव्याख्योक्तायाः ४५ धातुसंख्यायाः सम्मेलने (११४+४५=) १५९ संख्या भवति ।

अस्मात्—सचति, सचिवः[1] ॥१६३॥

१००. लोचृ दर्शने। लोचते, अलुलोचत्। आलोचितः, लोचनम्। लोचकः—स्त्रीशिरोवस्त्रम्, शिरस्त्रञ्च। चुरादौ भाषार्थः (१०।११७) आलोचयति, आलोचना ॥१६४॥

१०१. शच व्यक्तायां वाचि। तालव्यादिः। शचते। शची ॥

१०२. श्वच श्वचि गतौ। श्वचते, श्वञ्चते[2] ॥१६६, १६७॥

१०३. कच बन्धने। कचते। कचः, काचः। काचरः। कच शब्द उदात्तेत्[3]—कचति खच इति लौकिकोऽस्ति[4] ॥१६८॥

१०४. कचि दीप्तिबन्धनयोः। कञ्चते, कञ्च्यते। काञ्चनम्। काञ्चिकम्। काञ्ची। आद्यः कचिरिदित् परस्त्वनिदित्येके[5] ॥

१०५. मच मुचि कल्कने। कल्कनं दम्भः कथनञ्च[6]। मचते। मुचेति चन्द्रः (तु०च०धा० १।३५९) मोचते। मुञ्चते[7], मुञ्च्यते। तुदादौ मुच्लृ मोक्षणे (६।१३१) मुञ्चति, मुच्यते ॥१७०, १७१॥

---

परमत्र १६१ जायते। अतोऽत्र कौचिद् द्वौ धातू अधिकौ पठितौ।

१. क्षीरतरङ्गिण्यां नायं क्वचित् साक्षात् पठ्यते। 'षप समवाये' (१।२८५) इत्यस्य व्याख्याऽत्र द्रष्टव्या। सायणस्तु डुपचष् पाके (१।७१८) इत्यस्मादनन्तरं 'षच समवाये' इति पठति (धा० वृ० पृष्ठ० २०२)।

२. इतोऽग्रे 'शचि श्वचीति कौशिकः' इत्यधिकः क्वचित् पाठः।

३. अग्रिमेषु परस्मैपदिषु चान्तेषु धातुषु 'कच' धातुः क्षीरतरङ्गिण्यामन्यासु च धातुवृत्तिषु न पठ्यते।

४. धातुपाठेष्वपठितोऽपि लोके प्रयुज्यत इत्यर्थः। अपरे लौकिकशब्दस्य प्राकृत इत्यर्थः प्रतिजानते। तन्न, संस्कृतशब्दानां साधुत्वान्वाख्याने प्राकृतानामपभ्रंशभूतानां शब्दानामन्वाख्यानस्य प्राप्तेरसंभवात्।

५. सायणस्तु 'कचि काचि दीप्तिबन्धनयोः' इत्येवं पठति। मैत्रेयस्तु काचिं न पपाठ। काञ्चनं काञ्ची इत्युभयत्रान्येषामपि दृश्यते (६।३।१३७) इति दीर्घत्वमाह (धातुप्रदीप पृष्ठ १९)।

६. पाठोऽयं धातुवृत्तौ (पृष्ठ ६१) उद्धृतः। मैत्रेयस्तु कल्कनं दम्भः शाठ्यं चेत्याह (धा० प्र० पृष्ठ १९), दीक्षितस्तु कथने चेत्याह (सि० कौ०)।

७. उद्धृतमिदं पुरुषकारे (पृष्ठ ३९)।

१०६. मचि धारणोच्छ्रायपूजनेषु । मञ्चते । मञ्चः । उणादौ मञ्चुका खट्विका । मञ्चिकेति सभ्याः ॥१७२॥

१०७. पचि व्यक्तीकरणे । पञ्चते, प्रपञ्चयते । अच्—पञ्चः । पञ्चिका[1] न्यासः । पञ्च । पञ्चालाः । घञ्—पङ्कः । चुरादौ पचि विस्तारवचने (१०।१०१) प्रपञ्चयति । एरजण्यन्तानाम्[2] इत्यस्य प्रायिकत्वात् प्रपञ्चः, अस्य तु घञि कुत्वं स्यात् । दुर्गोऽदन्तमाह ॥१७३॥

१०८. ष्टुच प्रसादे । स्तोचते । घञि—स्तोकः[3]॥

१०९. ऋज गतिस्थानार्जनोर्जनेषु[4] । ऊर्जनम् प्राणनम् । अर्जते, उपार्जते, आनृजे । अन्ये तूद्रिक्तोद्रेकार्थे हलादिमेनं मन्यन्ते[5]॥

११०. ऋजि भृजी भर्जने । भर्जनं पाकप्रकारः । ऋञ्जते, आनृञ्जे[6] । उणादौ (द्र० ४।२२) ऋजीकम् पिष्टपचनम् । भर्जते । घञ्

---

१. पञ्चिका स्थाने पञ्जिका शब्दोऽपि प्रयुज्यते ।

२. महाभाष्ये नैतादृशं किञ्चिद् वचनमुपलभ्यते । काशिकाकारोऽपि 'उञ्छादीनां च' (६।१।१६०) सूत्रवृत्तौ 'एरजण्यन्तानाम् इति वचनात्' इत्येवं स्मरति । मूलमस्य मृग्यम् ।

३. 'स्तौति स्तोकम्' इति क्षीरस्वाम्यमरटीकायाम् (पृष्ठ २४९) । निरुक्ते (२।१) तु 'अथाप्याद्यन्तविपर्ययो भवति स्तोका रज्जुः सिकता तर्क्विति' इति ब्रुवता यास्केन श्चुतिर् क्षरणे इत्यस्मात् स्तोकपदनिष्पत्तिरुक्ता ।

४. 'ऊर्जनेष्विति क्षीरस्वामिधनपालशाकटायनाः' (धातु० वृत्ति पृ० ६२) 'तथैव पुरुषकारे (पृष्ठ ५८) ऽपि । प्रौढमनोरमायां (पृ० ५५९) क्षीरस्वामिप्रभृतयस्तु अर्जनेष्विति पेठुः' इति मुद्रितोऽपपाठो बोध्यः ।

५. 'ऋज' स्थाने 'रिज' इत्यर्थः ।

६. 'आनृजे (?, आनृञ्जे) इति सम्मतातरङ्गिण्योः, तदसत् । नुम्विधावुपदेशिवद्वचनात् । अत एव काश्यपमैत्रेयादयः आममेव (ऋञ्जांचक्रे) सर्वे उदाजह्रुः' इति सायण (धा० वृ० पृ० ६२) । मैत्रेयस्त्वाह—'नुमागमनिमित्ताऽपि यस्य गुरुमत्ता ततोऽप्याम् भवति, यथा इन्दाञ्चकार । केचित्तु आनृञ्जे इति प्रत्युदाहरन्ति । तत्रेन्धिभवतिभ्यां च (१।२।६) इन्धिग्रहणेनानित्य आम् इति ज्ञापितम् । तदनित्यमाम् इति न भवतीति यथाकथञ्चित् समाधेयम्' इति (धा० प्र० पृ० २०) ।

(द्र० ३।३।१९) भर्गो रुद्रः। ईदित्वाद् (द्र० ७।२।१४) भृक्तः[१]। भृष्टम् भ्रस्जेः (६।४) रूपम्। अबीभृजत्, अबभर्जत्। ऋदुपधाच्चाक्लृपिचृतेः (३।१।११०) क्यप्—भृज्यम्। अवश्यभर्ज्यम् एव आवश्यक (७।३।६५) इति कुत्वाभावः। उणादौ भर्जूरभ्योषः ॥१७६, १७७॥

१११. एजृ भ्रेजृ भ्राजृ दीप्तौ। एजते। एङि पररूपम् (६।१।९४) प्रेजते। मा भवानेजिजत् इत्यत्र नित्यत्वादन्तरङ्गत्वाच्च द्विर्वचने कृते ह्रस्वप्रसङ्गाभावात् ऋदित्वं व्यर्थमिति न वाच्यम्, ओणृज्ञापकात्[३]। अनुपसर्गाल्लिम्पविन्द (३।१।१३८) इति शः—उदेजयः। एजृ कम्पने (१।१४७) अस्मादेजति, तथा एजेः खश् (३।२।२८) अङ्गमेजयः। भ्रेजते, भ्राजते, भ्राजभास-भाषदीप (७।४।३) इति विकल्पेनात्वम्[४]—अबभ्राजत् अबिभ्रजत्। भ्राजृ टुभ्राशृ (१।५६४) इति वक्ष्यते, तस्य फणादित्वाद् एत्वाभ्यासलोपौ प्रयोजनम्—भ्रेजे, बभ्राजे, तथा व्रश्चभ्रस्ज (८।२।४६) इति षः, राजृसहचरितस्य यथा स्यात्—बाभ्राष्टि। अस्य तु बाभ्राक्ति"। भ्राजभासधुर्वि (३।२।१७७) इति क्विप्—विभ्राट्। नभ्राण्नपात् (६।३।७५) इति प्रकृतिः[६]। भुवश्च (३।२।१३८) इति चकारादिष्णुच्[७]—भ्राजिष्णुः। रेजृ इति च चन्द्रः[८] (च० धा० १।३६४) ॥१७८–१८०॥

११२. ईज गतिकुत्सनयोः। ईजते, वीज्यते। ईजीति दुर्गः—ईञ्जते। वीजेरलौकिका[९]दवीजयत् ॥१८१॥

---

१. श्वीदितो निष्ठायाम् (७।२।१४) इत्येनेडागमाभाव इत्यर्थः।

२. द्र० अमरक्षीरटीका (वैश्यवर्ग ४७) अभ्यूषपदव्याख्याने।

३. द्विर्वचनात् पूर्वं ह्रस्वत्वं प्रवर्तेत इति शेषः।

४. नायं विकल्पेनात्वं विधत्ते, तेन 'विकल्पेन ह्रस्वत्वम्' इति वाच्यम्।

५. मतमिदं सायणेन स्मृतम् (धा० वृ० पृष्ठ ६३)।

६. नञो नकारस्य प्रकृतिभावः इत्यर्थः।

७. यथोक्तं काशिकायाम्—'चकारोऽनुक्तसमुच्चयार्थः। भ्राजिष्णुना लोहितचन्दनेन' इति।

८. अत्रोक्तं धातुवृत्तौ—अत्र रेजिरपि क्वचित् पठ्यते, तदनार्षमिव (पृ० ६३)।

९. वीजधातुः शास्त्रेष्वपठितोऽपि लोके लब्धप्रचार इत्यर्थः। 'संवीजते' इति

### ११३. उदात्ता अनुदात्तेतः ॥

### [सेटः परस्मैपदिनः]

**११४. शुच शोके ।** इतो व्रजान्ताः (१।१५८) द्वासप्ततिः सेटः परस्मैपदिनश्च । शोचति, शोचिता । शोकः । शोच्यमिति[1] कुत्वं नेष्टं, ण्यन्तस्य वा रूपम् । जुचङ्क्रम्य (३।२।१५०) इति युच्—शोचनः । इगुपधात् किः[2] (चान्द्र उ० ११५२) शुचिः । अर्चिशुचि (उ० २।१०९) इतीस्—शोचिर्दीप्तिः ॥१८२॥

**११५. कुच शब्दे तारे[3] ।** कोचति, कुच सम्पर्चने[4] (धा० सू० १।५९५) इत्यर्थभेदार्थं ज्वलादौ पठिष्यते । उदुपधाद् भावादिकर्मणोरन्यतरस्याम् (१।२।२१) इति कित्वं वा—संकुचितं, संकोचितम् ॥१८३॥

**११६. क्रुन्च[5] गतौ ।** क्रुञ्चति । क्रुङ् । क्रुञ्चा । अञ्चुयुजिक्रुञ्चाम् (३।२।५९) इति निपातनान्नलोपाभावः । प्रज्ञादिभ्योऽण् (५।४।३८) क्रौञ्चः ॥१८४॥

**११७. कुन्च गतिकौटिल्याल्पीभावयोः ।** गतेः कौटिल्ये द्रव्याल्पत्वे च[6] । कुञ्चति, कुञ्चितम् । कुञ्चिका । कुङ्[7] । कुञ्चेणबुलि

---

प्रयोगस्तु जाम्बवतीविजये दृश्यते । यथा—'असौ गिरेः शीतलकन्दरस्थः पारावतो मन्मथचाटुदक्षः, घर्मालसाङ्गी मधुराणि कूजन् संवीजते पक्षपुटेन कान्ताम्' इति ।

१. 'शोच्यमिति निपातनात्' इति पाठा० । शोच्यपदस्य कुत्वाप्यनिपातनादपपाठोऽयम् । 'अशोच्यानन्वशोचस्त्वम्' (गीता २।११) इत्यादिषु शोच्यपदस्य दर्शनात् 'कुत्वं नेष्टम्' इत्येव युक्तः पाठः ।

२. इदं सूत्रं सर्वेषु पाणिनीयोणादिपाठेषु न दृश्यते । चान्द्रपाठेन सहेदं संवदति ।

३. कुच गताविति स्वामी (धा०वृ०पृ०६३) । अत्र तु न तथा पाठ उपलभ्यते ।

४. ज्वलादौ (१।५९५) तु 'कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु' इति पठ्यते ।

५. क्रुन्चेत्यादिषु धातुस्वरूपप्रदर्शनार्थं परसवर्णमकृत्वा नकारनिर्देशः कृत इति बोध्यम् । प्रयोगावस्थायां तु परसवर्णं भवत्येव ।

६. 'गतौ कौटिल्ये द्रव्याल्पत्वे चेति क्षीरस्वामी' (पृ० ६३) इत्येवं धातुवृत्तौ पाठ उपलभ्यते ।

७. क्विपि नलोपे रूपम् ।

नलोप इष्टः[1]—संकोचकः। एवमपि न धातुलोप आर्धधातुके (१।१।४) इति निषेधः स्यात्, तस्मादेतत् कुचेः (१।१।५) रूपम्। चान्द्रमुदित्त्वमतन्त्रम्[2] (च० धा० १।४७), यत् काल्यः सन्निपातपरिभाषायाः प्रयोजनमदात्[3] उदुपधत्वम् अकित्त्वस्य निकुचिते ( महा० १।१।३८ ) इति। यदि चायमुदित् स्यात्, इडागमोऽत्र न स्यात्[4] ॥१८५॥

**११८. लुन्च अपनयने।** अनुपयुक्तापासने। लुञ्चति। वञ्चिलुञ्च्यृतश्च (१।२।२४) इति क्त्वा निष्ठा च वा कितौ—लुञ्चित्वा, लुचित्वा, लुञ्चितः, लुचितः ॥१८६॥

**११९. अन्चु गतिपूजनयोः।** अञ्चति। आनञ्च। अक्त्वा, अञ्चित्वा, उदितो वा (७।२।५६) इट्। अञ्चेः पूजायाम् (७।२।५३) इति क्त्वानिष्ठयोर्नित्यमिट्—अञ्चित्वा गुरून्, अञ्चितो राजा, अन्यत्र यस्य विभाषा (७।२।१५) इति निष्ठायां नेट्—समक्तौ शकुनेः पादौ, अञ्चोऽनपादाने (८।२।४८) इति नत्वम्, अपादाने तु—उदक्तम् उदकं कूपात्। अनिदितां हल उपधायाः क्ङिति (६।४।२४) इति नलोपो नाञ्चेः पूजायामिति (६।४।३०) नास्ति—अञ्चिता गुरवः। नावञ्चेः (उ० १।१७) इति कुः—न्यङ्कुः[5], न्यङ्क्वादित्वात् (द्र० ७।३।५३) कुत्वम्। वृक्षशुनोरन्यत्र—न्यञ्चुः स्वेदबिन्दुः। उदङ्कोऽनुदके (३।३।१२३) साधुः, उदके तु ल्युट्—उदञ्चनी जलोद्धरणी। ऋत्विग्दधृग् (३।२।५९) इति क्विप्, उगिदचाम् (७।१।७०) इति नुम्—प्राङ्।

---

१. प्रयोगप्राचुर्यदर्शनादिति शेषः।

२. धातुवृत्तौ 'अत एव उदित्पाठिनौ चन्द्रतरङ्गिणीकारौ प्रत्युक्तौ' इति पठ्यते' (पृष्ठ ६४)। अत्र तरङ्गिणीकारस्योल्लेखोऽयुक्तः, क्षीरस्वामिना तूदित्पाठः प्रत्याख्यायानुदित्पाठस्य व्यवस्थापनात्।

३. 'अधात्' पाठा०।

४. यस्य विभाषा (७।२।१५) इति निषेधात् इति शेषः।

५. कुरङ्गसदृशो विकटबहुविषाणः [ मृगविशेषः ] इत्यष्टाङ्गहृदयस्य हेमाद्रिटीकायां, सूत्रस्थान ३।५०। न्यङ्कोर्विकारो नैयङ्कव इति पाणिनीयाः, न्याङ्कव इत्यापिशलाः। अत्र विशेषः 'संस्कृत व्याकरण शास्त्र का इतिहास' ग्रन्थस्य प्रथमाध्याये (पृष्ठ २२) द्रष्टव्यः।

घञि—पर्यङ्कः, पल्यङ्कः[1]। उदकमिति निपातितम्[2] ॥१८७॥

१२०. वनृचु, चनृचु, तनृचु, त्वनृचु, म्रुचु[3], म्लुचु गत्यर्थाः। वञ्चति। यङि अभ्यासस्य दीर्घे प्राप्ते नीग्वञ्चुस्रंसुध्वंसु (७।४।८४) इति नीगागमः—वनीवच्यते। उदितो वा (७।२।५६) इति वेट्–वक्त्वा, वञ्चित्वा, [वञ्चित्वा] वञ्चिलुञ्च्यृतश्च (१।२।२४) इति वा कित्त्वम्, वेट्त्वाद् यस्य विभाषा (७।२।१५) इति निष्ठायां नेट्—वक्तः। वञ्चितस्तु चुरादौ वञ्चु प्रलम्भने (१८।१५०) इत्यस्मात्। गृधिवञ्च्योः प्रलम्भने (१।३।६९) तङानौ—बालं वञ्चयते। नेह—अहिं वञ्चयति। स्फायि (उ० २।१३) इति रक् वक्रम्, न्यङ्क्वादिः (द्र० ७।३।५३)। घञि वञ्चेर्गतौ (७।३।६३) इति कुत्वं नास्ति—वञ्चं वञ्चन्ति वणिजः[4]। चञ्चति। चञ्चा तृणपुरुषः। चञ्चुरुष्ट्रादिः, चञ्चलश्चपलः। चाचलस्तु चले (धा० १।५६९) रूपम्। तञ्चेस्तक्रम्। म्रोचति। मलिनं म्लोचति, मलिम्लुचश्चौरः। जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च (३।१।५८) इत्यङ् वा—अम्रुचत्, अम्रोचीत्; अम्लुचत्, अम्लोचीत् ॥१८८-१९३॥

१२१. ग्रुचु ग्लुचु कुजु खुजु स्तेयकरणे। अग्रुचत्, अग्रोचीत्, अग्लुचत्, अग्लोचीत्। घञ्—ग्लोचः, न क्वादेः (७।३।५९) कुत्वाभावः। १९४-१९७॥

१२२. ग्लुनृचु षस्ज गतौ। न्यग्लुचत्, न्यग्लुञ्चीत्। सज्जति, सिसज्जिषति, सिसज्जयिषति। सज्जः सज्जितो हस्ती। क्वापि तङानौ[5]—प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु (गीता ३।२९), सज्जमानमकार्येष्विति,

---

१. परेश्च घाङ्कयोः (८।२।२२) इत्यनेन लत्वविकल्पः।

२. 'उदकं च' इत्युणादिसूत्रेण (२।३९) इति शेषः।

३. इतोऽग्रे 'मुन्चु म्लुन्चु' इत्यधिकौ क्वचित्। प्रकृतसूत्रव्याख्यायामनयोरुदाहरणादर्शनान्नेमौ स्वामिसम्मताविति स्पष्टम्।

४. द्र० कारिका ७।३।६३।

५. अत्राह सायणः—'अतोऽस्यात्मनेपदं दूषयन्तो वर्धमानक्षीरस्वाम्यादयः पुत्र दुष्टाः' (धा० वृ० पृ० ६७)। क्षीरस्वामिनात्रस्यात्मनेपदित्वमत्र स्वीकृतम्, न तु दूषितम्। अतः सायणीयो लेखश्चिन्त्यः।

(का० नीति, ४।४१)। चान्तो[1]ऽयमिति शिवः[2]—सश्चति ॥१९८, १९९॥

**१२३. गुजि अव्यक्ते शब्दे।** गुञ्जति। गुञ्जितम्, गुञ्जा। अनिदिदित्येके[3]—गोजति। जुगोज ॥२००॥

**१२४. अर्च पूजायाम्।** अर्चति, आनर्च। अर्चितः। अर्चा। यजयाचरुचप्रवचर्चश्च (७।३।६६) इति कुत्वाभावः, अर्च्यः। येषां मतेऽत्र ऋचेर् (धा० ६।२२) ग्रहणम्,[4] तत्पक्षे अर्क्यः। अर्चिशुचिहुसृपि (उ० २।१०९)—इतीस्—अर्चिः। अर्च्यत इत्यर्कः[5]। चुरादौ (१०।२०३) अर्चयति ॥२०१॥

**१२५. म्लेछ अव्यक्तायां वाचि।** म्लेच्छति। म्लेच्छनम्, म्लेच्छः। म्लेच्छो ह वा एष योऽपशब्दः, न म्लेच्छितवै, नापभाषितवै[6]। क्षुब्धस्वान्तध्वान्त (७।२।१८) इत्यविस्पष्टे म्लिष्टम् साधु, म्लेच्छितमन्यत् ॥२०२॥

**१२६. लछ लाछि लक्षणे।** लक्षणं चिह्नम्। लच्छति, लाञ्छति। लाञ्छनम् ॥२०३, २०४॥

**१२७. वाछि इच्छायाम्।** वाञ्छति। वाञ्छितम्, वाञ्छा ॥

---

१. 'अति नः सश्चतो नय' (ऋ० १।४२।७) इत्यादिषु चान्तोऽपि दृश्यते।

२. अयं महावैयाकरणः शिवस्वामी। उत्तरत्र (५।१०) अप्ययं ग्रन्थकृता स्मर्यते। शिवस्वामिनो विषये 'संस्कृत व्याकरण शास्त्र का इतिहास' नाम्नि ग्रन्थे (पृष्ठ ४३९) विस्तरशः उक्तम्। तत्रैव द्रष्टव्यम्।

३. मतमिदं धातुवृत्तौ (पृष्ठ ६७) पुरुषकारे (पृष्ठ ६०) चोद्धृतम्।

४. इदं काशिकाकारमतम् (काशिका ७।३।६३)। अर्चेर्ग्रहणे 'प्रवचर्च' इत्यत्र कथं सन्धिरिति नोक्तं स्वामिना।

५. घञि रूपम्, उ० ३। ४० द्रष्टव्यम्।

६. महाभाष्ये (आ० १ पा० १ आ० १) त्वेवं पठ्यते—'तेऽसुरा हेलयो हेलय इति कुर्वन्तः परा बभूवुः। तस्माद् ब्राह्मणेन न म्लेच्छितवै, नापभाषितवै। म्लेच्छो ह वा एष यदपशब्दः।'

७. म्लेच्छितम्=म्लेच्छाचरणम्।

१२९. ह्रीछ लज्जायाम् । ह्रीच्छति, जिह्रीच्छ

१३०. हुर्छा कौटिल्ये । हूर्छति, वोरुपधायाः (

ः; । निष्ठायाम् आदितश्च (७।२।१६) इतीण् नास्ति-

४।२१) रदाभ्यां निष्ठातो नः (८।२।४२) विभाषा भावादिकर्म

ा वेट्,हूर्छितमनेन,हूर्णम् ,प्रहूर्छितः,प्रहूर्णः । क्विप्—ह्

१३१. मुर्छा मोहसमुच्छ्राययोः । मूर्छति, म

र्छमदाम् (८।२।५७) इति निष्ठानत्वं नास्ति, मूर्तः । क्वि

३।३।९४) मूर्तिः, मूर्छितमनेन, मूर्तम्, प्रमूर्छितः, प्र

त इति तारकादित्वात् (द्र० ५।२।३६) इतच् ॥२०९

१३२. स्मुर्छा विस्मृतौ[3] । स्मूर्छति । स्मूर्छा ।

ते दुर्गः—स्फूर्छति, स्फूर्णः ॥२१०॥

१३३. युछ प्रमादे । युच्छति ॥२११॥

१३४. उछि उञ्छे । उञ्छ उच्चयनम् । उञ्छ

ः । उञ्छितः । शिलोञ्छनम्, शिलोच्चयनमित्यर्थः

१३५. उछि विवासे । विवासो विनाशः सम

छति । उष्टः । 'रजन्यां व्युष्टायामुषसि जनयामास तनयम्'[५]

१. अनुपलब्धमूलमिदम् ।

२. अयं भावः—तस्मात् पदेन पूर्वसूत्र (७।४।७०) वि

शात् नात्र नुडागमः । अत्र तु स्वाभाविक एव दीर्घ आकारः,

ंहितः ।

३. 'विस्तृतौ' पाठा०' ।

## षष्ठः परिच्छेदः

गर्भन्यासानन्तरं साङ्गोपपीठाधिष्ठानादिके निर्मिते, ततः विमाननिर्माणारम्भे मूर्धेष्टकाविधिः प्रसज्यत इति तमवतारयति अथेति—मूर्धारम्भेष्टका मूर्धेष्टकाः। तासां स्थापनपद्धतिरत्र मूर्धेष्टकाविधिरुच्यते। अयं तदनन्तरभाविनां स्थूपिकाकीलादीनामुपलक्षणम्।

आस्तीर्येति-स्त्रण्डिलोपरि दर्भान् यथायोगं विन्यस्येत्यर्थः। नपुंसकेष्टका इति-नादहीनया नपुंसकशिलया कृता इष्टका नपुंसकेष्टकाः। आभिरेव मूर्धेष्टकाः कर्तव्याः। यद्विकारा प्रथमेष्टकाः कृताः मूर्धेष्टकाश्च तद्विकारा एवेति नियमः। किं तु स्त्रीशिलया प्रथमेष्टकाः नपुंसकशिलया मूर्धेष्टका इत्यनयोर्भेदः। सम्पाताज्यमिति-होमसमये प्रत्याहुति सम्पतदाज्यं सम्पाताज्यमित्युच्यते। तेन = सम्पाताज्येन, ताः = चतस्रः मूर्धेष्टकाः याश्च द्वितीयवेदिकास्थस्थण्डिलोपरि शायिताः। पूर्वायतानीति-प्रतीचीतः प्राचीं प्रति विस्तृतानि। उदगायतानीति-अवाचीतः उदीचीं प्रति विस्तृतानि सूत्राणीति शेषः। निपातयेदिति-मण्डलरचनोपयोगिस्फुटरेखाङ्कनं यथा भवेत् तथा सूत्राणि आस्फालयेदित्यर्थः। आस्फालनेन सूत्रगतं पिष्टं गन्धं वा भूमौ रेखारूपेण पतति। येन वा कोष्ठविज्ञानं सुलभं भवेदाचार्यस्य।

श्वभूत इति-यद्रात्रावाचार्यः मूर्धेष्टकाधिवासमण्डपेऽशयिष्ट तदपेक्षया द्वितीयदिवस इत्यर्थः। महादक्षिणामिति-गोभूहिरण्यादिविविधोत्तमद्रव्ययुता महादक्षिणा तमित्यर्थः। चतुरस्रमिति-चत्वारि अस्राणि यस्य तत्

चतुरस्रं = चतुष्कोणमित्यर्थः । धृतपञ्चाङ्गभूषण इति–भूष्यत इति भूषणं, पञ्चानामङ्गानां समाहारः पञ्चाङ्गम् । पञ्चाङ्गस्य भूषणं पञ्चाङ्ग-भूषणम् । होरोपवीतकटककेयूराङ्गुलीयकानि पञ्चाङ्गभूषणानि । यथा विष्णुतिलके (९ ७)—

होरोपवींतकटककेयूराङ्गुलिभूषणम् ।
पञ्चाङ्गभूषणमिदं कथितं कमलासन ।।

इति । मूर्तिपानामिति—ऋत्विजामित्यर्थः । अर्धचित्रम् इति-पूर्णचित्रं अर्धचित्रं, आभासचित्रमिति शिल्पिनां परिभाषा । चित्रासने कैश्चिच्छिद्र-मित्यप्युच्यते[17] । पूर्णच्छिद्रमर्धच्छिद्रमाभासच्छिद्रमिति । द्वयोरवयोः मध्ये सति छिद्रे पूर्णच्छिद्रमिति । अर्धांशच्छिद्रे अर्धच्छिद्रमिति , छिद्राभासे आभासच्छिद्रमिति च वदन्ति शिल्पविदः । यथोक्तं विष्णुतिलके (३४३, ३४४-६)–

सम्पूर्णं निर्मितं बिम्बं पूर्वपश्चिमभागयोः ।
सा चित्ररूपा विज्ञेया पूर्वभागविनिर्मिता ।।
अर्धचित्रस्वरूपा या, पटभित्तिस्थलादिषु ।
वर्णाद्यैर्लिखिता या साऽऽभासचित्रा चतुर्मुख ।।

इति । लेपनक्रम इति —अयं त्रिधा भिद्यते स्थूलसूक्ष्मपटभेदेन । पाषाण-शर्करातक्रसुधया प्रथमतश्चूर्णितं द्रव्यं पुनः यद्येकवारं पिष्टं तर्हि स्थूल-मिति, द्विवारं यदि सूक्ष्ममिति, त्रिवारं यदि परमित्युच्यते । स्थूलादिद्रव्येण क्रियमाणस्य लेपस्य स्थूललेपनमिति, सूक्ष्मलेपनमिति, पटलेपनमिति च संज्ञा । यथोक्तं पाद्मसंहितायां—

पिष्टं तदेकवारं चेत् स्थूलं द्विः पिष्टमुच्यते ।
सूक्ष्मं, त्रिश्चेत्परं ज्ञेयं स्थूलाद्यालेपनक्रमः ।।

(७५-९ क्रिया) इति । अहृतैरिति–अधौतैर्नूतनैर्वासोभिरिति ।

मूर्धेष्टकाविधिं षष्ठे स्थूपिकाकीलपद्धतिम् ।
विमानदिग्देवकल्पं चाब्रवीत्सात्वतप्रियः ॥

---

## सप्तमः परिच्छेदः

अथ मूर्धेष्टकादिविधिनिरूपणानन्तरं प्रतिमानिर्माणौपयिकशिलादारूसङ्ग्रहपद्धतिं निरूपयितुकाम उपक्रमते प्रतिमेति––प्रतिष्ठाप्यविग्रहः प्रकृतिद्रव्यभेदेन षोढा भिद्यत इति भावः । नारदीयसंहिताप्रभृतिषु स्फाटिकप्रतिमामनङ्गीकृत्य पञ्चविधत्वं प्रतिमायाः प्रतिपादितम्[18] । छिद्ररूपेति–पूर्णच्छिद्रेति यावत् । प्रधानप्रतिमाविषये चित्राभासरूपशिल्पप्रतिषेधः तदनुत्कीर्तनाद्व्यज्यते । पटलत्रासादीति—पटलः त्रास इति रत्नगतौ दोषौ । प्रतिमार्थलोहः सुवर्णरजतताम्रारकूटभेदेन चतुर्विध इति नारदीयसंहिता[19] । आरकूटं तु पाद्मसंहितायां नोक्तम् ।

नादानुरोधं स्त्रीपुंनपुंसकभेदेन शिलां विभजते । शिलाच्छेदेष्विति—नारदीयसंहितायां नादातिरिक्तानि लक्षणानि तेषामभिहितानि[20] । अपि च बालामध्यावृद्धाभेदेन शिलायाः अवस्थात्रयमपि तत्राभिवर्णितम्[21] । प्राक् आलयनिर्माणयोग्या भूः सुपद्मादिभेदेन चतुर्धा निरुक्ता । सम्प्रति प्रतिमायोग्यशिलाधारभूता भूरपि वारुणी माहेन्द्री आग्नेयी वायवीति चतुर्धा विभज्यते । कुसुमवनेति—कृष्णमृगेति—अत्र 'कृष्णाख्यमृगसेविते' इति (SPB) पाठः साधीयान् । वृत्तानुकूल्यलोभेन कृष्णासारेत्यपि केचिन्मन्वते । तदसत् । अपप्रयोगात् । रजनीचूर्णं नाम हरिद्रा । दधिसम्मिश्रितलाजपिष्टस्य करम्भ इति नाम । करकजलेनेति–करोति किरति वा जलमत्रेति करकम् । 'कार्तिकाद्यष्टमासेषु दारुसङ्ग्रहः

प्रशस्त इति मूलं परित्यज्य वृश्चिकादिमिथुनान्तेष्विति कथनं सौरमानादरेणेति विज्ञेयम् । उपस्थाय=स्तुत्वेत्यर्थः । निष्कशतमिति—पञ्चतुलामितस्य स्वर्णनाणकस्य निष्कमिति नाम । तेषां शतं निष्कशतम् ।

गर्भादिदोषस्तच्छोधः स्त्र्यादिभेदः शिलादिगः ।
शिलादिसङ्ग्रहाध्वा च सप्तमे सुनिरूपिताः ॥

---

## अष्टमः परिच्छेदः

आलयबिम्बादिनिर्माणाङ्गजातं व्याख्याय तदनन्तरं प्रतिष्ठां व्याचिकीर्षुः तदङ्गेषु सर्वप्रधानं अङ्कुरार्पणं प्रथमतो निरूपयति नूतनेति—पालिकाघटिकाशरावाः अङ्कुरार्पणसाधनभूताः पात्रविशेषाः । तेषां लक्षणस्वरूपादिकं सुगमम् ।

अयुग्मा मानुषे कार्या दैवे युग्मास्तु पालिकाः' इति पाद्मसंहिता (३८-२४) वचनात् दैवकार्येषु युग्माः, मानुषे तु अयुग्माः ग्राह्याः । अत्र पालिका इत्यनेन घटिकाशरावयोरप्युपलक्षणविधयाऽन्वयः । अङ्कुरार्पणपात्रपूरणाय मृद आवश्यकतया तत्सङ्ग्रहप्रकार उपदिश्यते तदन्विति । पाद्मसंहितायाम्-'मूर्ति देवस्य वाराहीमभ्यर्च्य कुसुमैर्भुवम्' इति वर्तते। लोके तु नवतालमानेन पृथिवीवराहयोः प्रतिमां शालिचूर्णैः विलिख्याराधयन्ति सर्वे। विष्णुतिलके तावत्—

साम्प्रोक्ष्य विलिखेत्पश्चाद् भुवं भूम्यां यथाविधि ।
नवतालेन मानेन शम्भुदिङ्न्यस्तमौलिकाम् ॥
नैर्ऋतन्यस्तचरणामूर्ध्ववक्त्रां निरामयाम् । [१३,१४-७]

इति पृथिव्याः लक्षणमुक्तम् । तदनुरोधेनैव वराहगुरुरपि भुवः लेखनपद्धतिं प्रयोगपदवीमारोपयति । ऊर्ध्ववक्त्रामिति—पाद्मेऽनुक्तान् विषयान् वासुदेवपुण्याहादीन् विष्णुतिलकानुरोधेनैवायं निवेशयति चन्द्रिकायामिति न परोक्षं प्रेक्षावताम् ।

लक्षणं पालिकादीनां मृत्सङ्ग्रहणपद्धतिम् ।
प्रतिष्ठांगतयोद्दिष्टं गुरुरूचेऽष्टमे च नः ॥

---

## नवमः परिच्छेदः

अथाङ्कुरार्पणविधिरित्यस्य कोऽर्थः ? परिच्छेदेऽस्मिन् निरूप्यमाणस्य कर्मजातस्य कथमिदं शीर्षकं युक्तरूपं स्यादिति चेदुच्यते । बहुविधपरिणामशालिनि लोकव्यवहारे बहूनि पदानि स्वार्थसम्बन्धिपदार्थं लक्षणया बोधयन्तीति सर्वजनीनोऽनुभवः । प्रकृतेऽस्य कर्मणः मङ्गलाङ्कुरावापः,[22] अङ्कुरार्पणं,[23] अङ्कुरारोपणं,[24] अङ्कुरावापनं,[25] बीजावापनं[26] इति दृश्यन्ते बहुधा व्यपदेशाः । अत्राङ्कुरपदस्य लक्षणया बीजमित्येवार्थः । अथवा—

'प्रागेव वापयेद्बीजानङ्कुरार्थं यथाविधि' इति पाद्मोक्तविधया[27] अङ्कुरसिद्धयर्थं क्रियमाणं बीजावापनं, अङ्कुरावापनं, अङ्कुरारोपणं, अङ्कुरार्पणमिति चोच्यत इति वक्तव्यम् । अङ्कुराणि प्रशस्तानि वापयेदित्यादिषु स्थलेषु अङ्कुरपदेन बीजमेवोच्यत इति स्पष्टमिति दिक् ।

आजान्विति –– आ जानोः आजानु = जानुपर्यन्तमित्यर्थः ।

'आङ्मर्यादाभिविध्योः' इत्यव्ययीभावसमासः। आढकेति—प्रस्थचतुष्टयं आढ़कम्। आसमन्तात् ढौकते गच्छतीत्याढ़कम्। ढौकृ=गत्याम्। प्रतिष्ठते धान्यमत्रेति प्रस्थम्। ष्ठा = गतिनिवृत्तौ। प्रस्थं नाम कुडवद्वयम्। कुल्यते संस्त्यायते धान्यमिति कुडवम्। कुल्य=संस्त्याने। शालिधान्यं प्रस्थचतुष्टयं, तण्डुलानि प्रस्थद्वयं, तिलाः प्रस्थमात्रा इति भावः।

बीजावापनं द्वादशाक्षरविद्यया कार्यमिति पाद्मविष्णुतिलकादिषु संहितासु[28]। विश्वामित्रसंहितायां तु मूलविद्यया तद्विधेयमित्युक्तम्[29]। मूलविद्येत्यस्य अष्टाक्षरीं प्रधानतया द्वादशाक्षरीं च क्वचित् अर्थतया वर्णयन्ति शास्त्रविदः। अष्टाक्षर्याऽपि बीजावापनं अद्यापि लोके दरीदृश्यते। अतः तत्तत्सम्प्रदायानुरोधं अष्टाक्षर्या द्वादशाक्षर्या च बीजावापनं कर्तुं शक्यत इति संक्षेपः।

अङ्कुरारोपणविधिं साङ्गं सम्यङन्यरूपयत्।
नवमेऽस्मिन् परिच्छेदे नवमेधानिधिर्गुरुः॥

———

## दशमः परिच्छेदः

अथाङ्कुरार्पणं साङ्गं निरूप्य तदनन्तरं प्रतिष्ठोपकरणेषु प्रधानान्युपकरणानि कुण्ड-स्रुवस्रुवाष्टमङ्गलादीनि निरूपयितुमुपक्रमते प्रासादस्येति – प्रतिष्ठार्थं सज्जीकृतस्य मन्दिरस्येति यावत्। मण्टपमिति– अधिवासमण्डपमित्यर्थः। एकहस्तोच्छ्रितामिति–भूमेरुपरि एकहस्तोन्नतामित्यर्थः। त्रितालादिति–विरुद्धदिक्प्रसारिताङ्गुष्ठतर्जन्योः मध्यगत आयामः तालमित्युच्यते। प्रायस्तदष्टाङ्गुलं स्यात्। ननु विष्वक्सेनसंहितायां—

द्वादशाङ्गुलमानं हि तालमित्यभिधीयते।
तालद्वयं भवेद्धस्तमिति मानविदो विदुः॥ (२२–१०)

इति द्वादशाङ्गुलमितं तालमित्युक्तम्। भवद्भिस्तु अष्टाङ्गुलं तालमुच्यते। तत्कथमिति चेत्–इत्थम्। 'यवाष्टावङ्गुली स्मृता (१४–१०) इति तत्संहितोक्तरीत्या तिर्यग्विन्यस्तयवाष्टकायाममिताङ्गुलमानेन तालं द्वादशाङ्गुलमितमेव भवति।

'देशिकाङ्गुलिमध्यस्य मध्यरेखासमा मुने' (१५–१०) इत्युक्ताङ्गुलीमानानुसारेण अष्टाङ्गुलमेव तालं भवतीति गमनिका। त्रिविधान्यङ्गुलानि तत्रोपदिष्टानि[30]। तद्भेदकृतः तालभेदोऽपीत्यवगन्तव्यमिति न कश्चिद्विरोधः।

पूर्वदेश इति—वेदिकायाः पूर्वदिग्भागे। द्व्यङ्गुलं विसृज्येति–

सात्विकी प्रथममेखला द्व्यङ्गुलविस्तारेत्यनेन लभ्यते। चापाकारमिति– इदमेव चापकुण्डमथवा धनुष्कुण्डमित्युच्यते।

प्रकृतिमिति–कुण्डनिर्माणार्थं मध्ये क्रियमाणस्य गर्तस्य प्रकृतिरिति नाम। इयं विंशत्यङ्गुलायामविस्तारा। भुवनसंख्येति–चतुर्दशाङ्गुलवशेनेति यावत्। षडश्रकुण्डमिति – षट्कोणकुण्डमित्यर्थः। पक्षाङ्गुलवशेनेति– पञ्चदशाङ्गुलवशेन। वेदनागवशेनेति–अष्टाचत्वारिंशदंगुलवशेन। सैकाग्निवेदाङ्गुलवशेनेति–चतुष्षष्ठ्यंगुलवशेन। होमसाधनभूतस्रुक्स्रुवौ निर्वक्ति सुवर्णादीति। गुणसंख्यया=षोढा। गोलाङ्गूलाकृति–धेनुपुच्छा-कृतिम्।

अष्टमङ्गलानां श्रीवत्सादीनां स्वरूपं निरूपयितुं प्रक्रमते यथा विभवमिति। इतरोपकरणानि केवलं नाम्नोत्कीर्तयति औदुम्बरेति।

कुण्डानां स्रुक्स्रुवादीनां लक्षणादिकमन्ततः।
अथाष्टमङ्गलानां च दशमे विशदीकृतम्।

# एकादशः परिच्छेदः

अथ कुण्डस्रुक्स्रुवाष्टमङ्गलादिप्रतिष्ठोपकरणानि निरूप्य छायाधिवासजलाधिवासौ प्रतिपादयितुमुपक्रमते पूर्वमिति-यस्याः प्रतिकृतेः साक्षाज्जलाधिवासः नैव युज्यते तस्याः छायाधिवासः विहितः दारुलोह-शिलाप्रतिमानां जलाधिवासश्च ।

मानेति-'मानं तुलाङ्गुलिप्रस्थैः' (अम. २-८-८५) इत्नुशासनात् लोके उन्मान-प्रमाण-परिमाणानि तुलां-गुल-प्रस्थादिषु प्रसिद्धानि दरीदृश्यन्ते । यथाहु :--

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ।
आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः ॥

इति । शास्त्रेऽस्मिन् उक्तपूर्वविलक्षणं मानद्वयं उपमानलम्बमानाभिधं (P. 43) प्रतिपाद्यतें, आहत्य पञ्चविधं मानमिति फलितम् । प्रतिमासन्निधाविति-प्रतिष्ठाप्य प्रतिमान्तिक इत्यर्थः । खारिद्रोणेति-खारिमितानि वा द्रोणमितानि वा तण्डुलानीत्यर्थः । खं महत् आकाशमस्यास्तीति खारी । द्रवति धान्यपरिमाणाय सर्वतो गच्छतीति द्रोणः ।

निष्कप्रमाणेति — 'निष्कमष्टाधिकस्वर्णशते' (२५-कान्त) इति विश्वकोशवचनात् अष्टोत्तरशतस्वर्णप्रमाणानि हेमसूत्राणीत्यर्थः । अशीतिगुञ्जाप्रमाणस्य सुवर्णस्य स्वर्णमिति संज्ञा, तादृशस्वर्णानामष्टोत्तरशतं निष्कमुच्यते । नितरां कायते स्तूयते इति निष्कः । कै=शब्दे । द्विषट्काक्षरविद्ययेति-द्वादशाक्षरीमन्त्रेण । अनिर्वाणमिति-अखण्डदीपमित्यर्थः ।

मूर्तिपैः=ऋत्विग्भिरिति । शालिभारमिति-द्विशतोत्तरैकोनविंशतिसहस्र-तुलामितं शालिधान्यमित्यर्थः । तदर्धमिति-षट्छतोत्तरनवसहस्रतुलापरिमितानि तण्डुलानि । तदर्धं तिलमिति—अष्टशतोत्तरचतुस्सहस्रतुलामितास्तिला इति ।

नमस्तुभ्यमिति—एतत्परिच्छेदारम्भे वर्तमानं (*P.* 44) चतुष्षष्टिवर्णात्मकं मन्त्रमित्यर्थः । स्नानपानादिमिति-तज्जलं स्नानस्य पानस्य वा नोपयोज्यमित्युक्ते ततोऽपि जघन्यकर्मनिषेधः कैमुतिकनयसिद्ध इति ज्ञेयम् ।

छायाधिवासो बिम्बानां जलाधिवसनं पुनः ।
एकादशे परिच्छेदे यथाविधि निरूपिते ॥

---

## द्वादशः परिच्छेदः

छायाधिवासजलाधिवासनिरूपणानन्तरं वास्तुयागं नयनोन्मीलनं च निरूपयितुमारभते एवमिति—विस्रस्ताङ्गमिति । शिथिलितावायवमित्यर्थः । तत्र कारणं त्वेवमुच्यते । पुरा भार्गवस्वेदसम्भवः चतुर्वक्त्रः वास्तुनामा असुर आत्मनो बलदर्पेण महता सुरान् हन्तुमुद्यतोऽमरलोकमभ्यद्रवत् । ततः देवैस्ताडितोऽयं विह्वलस्सन् विस्रस्ताङ्गः पपात पृथिव्याम् । धारयति च प्राणानद्याप्यधोमुखः, प्राक्छिराः प्रसारितपाणिपादः । अनुष्ठीयमानस्य कर्मणः दैवत्वसम्पादनाय सोऽवश्यमर्चनीयः । अन्यथा कृतं कर्म आसुरं भवेदिति प्रहृतः कश्चन सम्प्रदायः शास्त्रसिद्धः[31] ।

अस्त्राभिमन्त्रितानिति—अस्त्रमन्त्राभिमन्त्रितानिति । आनद्धेति-वाद्यानि आनद्ध-तत-सुषिर-घनभेदेन चतुर्विधानि प्रसिद्धानि । मृदंगादिवाद्यं चर्मणा आनद्धतया आनद्धमिति, वीणादिवाद्यं तन्त्रीभिर्व्याप्ततया

ततमिति, वेण्वादिवाद्यं सुषिरमूलकतया सुषिरमिति, कांस्यतालादिवाद्यं घनाधिकतया घनमिति च प्रथन्ते । दर्पणस्थमिति – दर्पणे तिष्ठतीति दर्पणस्थः तं, मुकुरप्रतिफलितमित्यर्थः । द्विषडर्णमिति – द्वादशाक्षरी-मन्त्रमिति । अर्णशब्दोऽक्षरवाची । ध्रुवबिम्बमिति – प्रतिष्ठान्तरमु-त्सवादिबिम्बवत् इतस्ततश्चलनं विना स्थिरतया वर्तमानत्वात् ध्रुवबिम्ब-मिति ।

'ध्रुवं तु निश्चिते तर्के निश्चले शाश्वतेऽन्यवत्' इति विश्वकोश-वचनात् ।

सर्प्यक्तमुखया — आज्यसिक्ताग्रभागया शलाकयेत्यर्थः । अत्र सर्पिरक्तमुखयेति पाठः असाधुः । रक्तपदस्यानन्वितत्वात् । अत्र नयनो-न्मीलनमाचार्येणैव कार्यमिति ज्ञायते । नयनोन्मीलनात्प्राग्बहूनामधिवा-सादीनां बिम्बसंस्कारकाणामनुष्ठितत्वात् । तदनन्तरं पुनरन्यस्पर्शस्तरां निषिद्धः । अत एवात्र शिल्पिना तत्कर्तव्यमिति नोपदिष्टम् । ननु क्वचित्तैरेव तदनुष्ठानस्योपलभ्यमानत्वात्कथमिति चेत् – तन्मन्दम् । सम्प्रदायानवबोधमूलकत्वात्तस्य ।

जीवाजीवात्मकैरिति—हस्त्यश्वगोप्रभृतीनि जीवात्मकानि धनानि भूहिरण्यादीनि अजीवात्मकानीति भावः ।

वास्तुयागस्तथा नेत्रोन्मीलनं च यथाक्रियम् ।
द्वादशेऽस्मिन् परिच्छेदे विवृते विदुषां मुदे ।।

---

## त्रयोदशः परिच्छेदः

कर्माङ्गभूतस्नपनं स्वतन्त्रादिभेदेन बहुविधम् । अत्र नयनोन्मीलनरूपकर्माङ्गभूतं स्नपनं प्रतिपाद्यते । तच्च बिम्बशुद्धिनिमित्तकम् । सङ्कल्प्येति–देशकालादिकीर्तनपुरस्सरमिति शेषः । प्रतिसरकर्मेति–रक्षाबन्धनमिति यावत् । 'हस्तसूत्रे प्रतिसरः'(अम. ३-३-१७४) इत्यनुशासनात् । कङ्कणपर्यायोऽयं शब्दः । प्रतिसरति विरुणद्धि अशुभमिति प्रतिसरः । सृ=गतौ । चन्दनार्द्राणीति–आस्फालने भुवि रेखाङ्कनसमर्थानि यथा भवन्ति तथा नितरां चन्दनेन सिक्तानीनि भावः । आढकमिति — प्रस्थचतुष्कम् । प्रस्थमिति — कुडवद्वयम् । तत्तुर्यांशानीति—प्रस्थतुर्यांशानि । निकुञ्चद्वयमिति भावः । द्रोणपरिपूरकानिति–चतुराढकपरिमितद्रव्यपूरणयोग्यानि । रजनीति–हरिद्रेति यावत् ।

पलमात्रैः— कर्षचतुष्टयमात्रैरिति । षोडशमाषपरिमितः कर्षः । एवं च चतुष्षष्टिमाषपरिमितं पलमित्यर्थः । कुडुबमानैरिति — कुडवः, कुडुपः, कुडुब इत्यनर्थान्तरम् । प्रस्थार्थस्य कुडव इति संज्ञा । आघारादिति — कुण्डस्थे वह्नौ स्थण्डिलस्थे वा कञ्चिद्देशमारभ्य देशान्तरपर्यन्तं समन्त्रकं आज्यधारया आहरणं=प्रक्षेपणं आघार इत्युच्यते । तत्सम्बन्धितया तत्त्वेन व्यपदेश आज्यस्य । पीयूषमिति — दुग्धमित्यर्थः । द्रोणमानमिति— स्नपनार्थकत्वादधिकतया निर्देशः । आढकचतुष्कमितं यथा सर्वं भवेत्पञ्चगव्यं तथा सम्पाद्यमिति भावः ।

देवखातेति–देवमन्दिरनिर्माणार्थमथवा देवकार्यार्थं खाते इत्यर्थः । प्रतिद्रव्येति—उक्तपूर्वद्रव्यपूर्णघटैर्यदा यदा स्नपनं तदा तदा उपस्नानादिकं कर्तव्यमित्युच्यते । प्रधानद्रव्यस्नानानन्तरं तदनुगुणद्रव्यान्तरेण वा

उष्णोदकेन वा स्नानं उपस्नानं नाम। सहस्रधारयेति—सहस्रधारापात्रेणेति। घृतस्येति—घृतस्नानानन्तरं तत्कृतस्नेहशोधकतया उष्णोदकेनोपस्नानं विहितम्। एवं सर्वेषामपि द्राव्याणामनुगुणमुपस्नानं कल्पनीयमित्यलं विस्तरेण।

कर्माङ्गस्नपनं सप्तदशसंख्यैर्घटैः पुनः।
त्रयोदशे परिच्छेदे वराहगुरुणोदितम्॥

---

## चतुर्दशः परिच्छेदः

कर्माङ्गं स्नपनं यथाविधि निरूप्य तदनु शयनाधिवासं कुम्भस्थापनपद्धतिं च प्रतिपादयितुमुपक्रमते। अथेति—चक्राब्जमण्डलमिति—मण्डलरचनाप्रकार उपरिष्टात् षड्विंशे परिच्छेदे (P. 123) चर्यापादप्रयोगारम्भे दीक्षाविधिप्रकरणे स्वयं व्युत्पादयिष्यति मूलकृदिति नात्र विव्रियते। शय्यावेदिमिति—शय्यार्थां वेदिः शय्यावेदिः ताम्।

द्वादशार्णमनुनेति—द्वादशाक्षरीमन्त्रेणेति, मनुः= मन्त्रः। मन्यत इति मनुः। मनु=अवबोधने, कम्बलैरिति—रत्नकम्बलैरिति यावत्। काम्यत इति कम्बलः। कमु=कान्तौ। जाम्बूनदकृतानिति—सुवर्णेन निर्मितानिति।

'रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्' (अम. २-९५) इत्यनुशासनात् रुक्मादयः समानार्थकाः शब्दाः। जम्बूफलरसोत्पन्ननदीभवत्वाज्जाम्बूनदमिति प्रसिद्धिः।

अधिवासश्शायनश्च कुम्भस्थापनपद्धतिः।
चतुर्दशे परिच्छेदे न्यरूपि गुरुणा क्रमात्॥

---

## पञ्चदश: परिच्छेद:

अथ शयनाधिवास–कुम्भस्थापनादिविधिं निरूप्य गोदोहनादि निरूपयितुमुपक्रमते अथेति–गोदोहनप्रक्रिया पाद्मसंहितायां न प्रतिपादितेति बराहगुरुरत्र आपस्तम्बश्रौतसूत्रानुरोधं तां न्यरूपयत्। मन्त्रविनियोगे सूत्रादयं प्रयोगः केषुचित् स्थलेषु भिद्यते[32]।

"पूषासि इति वत्समभिदधाति" इति सूत्रम्[33]। अभिदधाति= बध्नातीत्यर्थः। वत्सबन्धनार्थकोऽयं मन्त्र आमन्त्रणार्थकतयाऽत्र निर्दिष्टः। 'उपसृष्टां मे प्रब्रूतात्' इति सम्प्रेष्यति इति सूत्रम्[34]। अयमध्वर्योः सम्प्रैषः। उपगतवत्सां गां मे प्रब्रूहीति अध्वर्युः दोग्धारं संप्रेष्यतीति भावः। अत्र इतीति पदं लुप्तम्। उपसृजामीति दोग्धुः प्रतिवचनम्। 'अयक्ष्माव' इत्यर्धर्चेन वत्सोपसर्गः। द्वितीयेन गोः पादे वत्सबन्धनम्। 'गां चोपसृष्टा-मित्यध्वर्युः यजमानायाचष्टे; 'उपसीदामीति' दोग्धा अध्वर्युमामन्त्रयमाण उपसीदति।

गङ्गामिति—प्रथमां गां गङ्गामिति, द्वितीयां सरस्वतीमिति, तृतीयां गोदामिति, चतुर्थीं यमुनामिति चतस्रः गा उदङ्मुखाः दोग्धव्याः। दोहनमिति-प्रथमं दोहनमिति। दोहयित्वा–एवं उपर्युक्तक्रमेण चतुर्वारं दोहयित्वेति भावः। विसृज्येति–त्रिवारं वाचं उच्चार्येत्यर्थः। 'प्रज्ञात-मिति–कस्यचित्पदार्थस्योपयोगकाले पुनः शीघ्रलाभार्थम्। अत्रेदं मया स्थापितमिति शीघ्रस्मृतिजनकसङ्केतः प्रज्ञातमित्युच्यते [35]।

तत्त्वन्यास इति–अत्र पुरुषादीनां पञ्चविंशतितत्त्वानां देवस्य तत्तदङ्गेषु न्यासप्रकार उपदर्शितः।

गोदोहनविधिः श्रौतः तत्त्वन्यासादयः पुनः ।
परिच्छेदे पञ्चदशे पाञ्चरात्रविदोदिताः ॥

---

## षोडशः परिच्छेदः

न्यासोऽयं षोडशधा भिद्यमानः प्रतिष्ठायां मूलबेरे विधीयते । जङ्गमबिम्बेषु न्यासोऽसौ निषिद्धः 'न जङ्गमेषु बिम्बेषु षोडशन्यासमाचरेत्' (१४९-२७ क्रि.) इति पाद्मवचनात् ।

उचितज्ञोऽयं वराहगुरुरित्यत्रेदं निदर्शनं यत् प्रतिष्ठाङ्गभूतषोडशन्यासविधिमन्वर्थमाकलयन् षोडशाध्याय एव साभिनिवेशमुपदिशतीति । ननु यद्यपि पाद्मादिसंहितासु न्यासः षोडशधा उपन्यस्तः[36] तथापि ग्रन्थेऽस्मिन् सप्तदश न्यासा दरीदृश्यन्ते । तेषु च मध्ये सम्भवन्ति भेदाश्चाल्पीयांसः । कथं नाम तदुपपद्यत इति चेत् —

सत्यम्, पाद्मे ग्रहन्यासः नोपदिष्टः । विष्णुतिलके स च विहितः । विष्णुतिलके षड्गुणन्यासः नोपदिष्टः । स च पाद्मे समुपलभ्यते । गुणन्यास इति सत्त्वरजस्तमोगुणानां न्यासस्य विहिततया पुनः षड्गुणन्यास इति ज्ञानादीनां न्यासः नोचित इति विष्णुतिलके तदनुपदेशः । न्यासविधाने सर्वधा विष्णुतिलकसंहितामनुसरता वराहगुरुणा ग्रहन्यासोपादानपुरस्सरं षड्गुणन्यासः परित्यक्तः । पाद्मापेक्षया तस्य विष्णुतिलक एव नैर्भर्यमित्यस्मद्वचनमुपोद्बलयतीदं प्रघट्टकम् ।

अक्षरन्यासे–'अकारं तालुनि न्यस्य' (१६२–२७ क्रि.) 'अः कारं रसने तथा (१६३–२७ क्रि.) इति अकारस्य तालुनि, अःकारस्य रसने न्यासं विदधानां पाद्मसंहितां परित्यज्य,

'अकारः प्रथमो वर्णः जिह्वायां न्यासमाचरेत्' (३५२-७)

अः कारं तालुनोऽपि (३५७–७) इति विष्णुतिलकसंहितानु-रोधं अकारस्य जिह्वायां, अःकारस्य तालुनि च न्यासमुररीकरोतीति ।

अङ्गुष्ठाभ्यामिति – अङ्गुष्ठाभ्यामित्यारभ्य कनिष्ठिकाभ्या-मित्यन्तं पूर्वं पाद[3]' इति संयोज्यम् । पादाङ्गुष्ठाभ्यामित्यादि ग्रहन्यासे उदरायेति–अत्र उदरस्थाने ऊरुपदं, पादादिसर्वगात्रेभ्य इत्यत्र कण्ठपदं च वक्तव्यमिति केचिदभिप्रयन्ति । तदत्यन्तं प्रमाणविरुद्धमित्युदासितम् । पाद्मापेक्षया विष्णुतिलके न्यासविधिर्विपुलतया निरूपित इति मनागिव मूलकारस्य तस्यामादरः ।

न्यासाः षोडश संदृब्धाः प्रणवाद्या यथाविधि ।
षोडशेऽस्मिन् परिच्छेदे ह्यन्वर्थे मन्त्रिणां मुदे ॥

---

## सप्तदशः परिच्छेदः

प्रणवादिषोडशन्यासान्निरूप्य तदनन्तरमनुष्ठेयं शान्तिहोमं परिवारहोमं च निरूपयितुमुपक्रमते एवमिति। तथा हुत्वेति—अष्टोत्तरशताहुतीर्हुत्वेत्यर्थः। एवमुत्तरत्रापि स्थलत्रये विज्ञेयम्। सम्पातेनेति—आहुतिसमर्पणवेलयां सृगादितः अधःपतितस्य द्रव्यस्य सम्पातमिति व्यवहारः[38]। तेन सम्पातद्रव्येणेति यावत्। वेतसशाखयेति-वानीरशाखयेति यावत्। वेति अम्भः अनुवर्तत इति वेतसः। वी = गतिप्रजनकान्त्यसनखादनेषु सेचनोपयोगिजलाहरणक्षमतयाऽस्य परिग्रहः।

चतुर्विधमन्नमिति —केवलान्न—मुद्गान्न—पायसान्न—गुडान्नभेदभिन्नं चतुर्विधमन्नमित्यर्थः। पूर्वसंख्ययेति—अष्टोत्तरशतसंख्ययेति भावः।

आवरणपञ्चकं सुप्रथितं शास्त्रे,[39] यथा अन्तर्मण्डलनामकं प्रथमावरणं, अन्तर्हारनामकं द्वितीयावरणं, मध्यान्तर्हारनामकं तृतीयावरणं, मर्यादानामकं चतुर्थावरणं, महामर्यादानामकं पञ्चमावरणं च। एवं स्थितेऽत्र चतुर्थावरणस्य मध्यमायां इति पाठः न साधीयान्। तत्र मर्यादायां इति निवेश उचितः। तथैवोपरिष्टात् महामर्यादायेत्यपपाठः। तत्रापि महामर्यादायामित्येव वक्तव्यम्। अनुपदमेव तत्तद्द्वारपालादीनां निरूप्यमाणत्वात्। अभिनिकेतमिति—देवालयमभितः यथा भवति तथोत्थाप्येति भावः।

शान्तिहोमं तथा सर्वपरिवाराहुतिं पुनः।
परिच्छेदे सप्तदशे भट्टाचार्योऽब्रवीत्सुधीः॥

——

# अष्टादशः परिच्छेदः

यदङ्गभूतं कर्मजातमद्यावधि समुपदिष्टं तत् प्रतिष्ठाख्यमङ्गि निरूपयितुमुद्युंक्ते अथेति—पीठस्थापनं, प्रतिष्ठेत्यनर्थान्तरम् । कुम्भाभिषेक इत्यपि प्रतिष्ठापर्यायतया केचिदर्वाचीनाः कथयन्ति । नायं पाञ्चरात्रनय-प्रयोगारूढः शब्दः ।

अत्र सत्स्वपि नवसु धान्येषु अष्टानां बीजाना, सत्स्वपि नवसु रत्नेषु अष्टानां रत्नानां, अष्टानां धातूनां, सुवर्णादि लोहसहितस्वर्णकूर्म-शङ्खचक्राणां अष्टानां, अष्टमङ्गलानां अष्टबन्धनद्रव्याणां च प्रतिष्ठायां परिग्रहः सकलमन्त्रमकुटायमानस्य मन्त्रराजस्य अष्टाक्षरस्य प्रभावतस्सम्पन्न इति प्रतिभाति । यतो वा तेनैव कुम्भस्थस्य देवस्य प्रतिमायां संयोजनं न्यासं च विधीयते ।

आचार्येण वास्तुशिल्पकलाभिज्ञेन अवश्यं भाव्यमित्यनेन स्पष्ट-मवगम्यते यत् ऊर्ध्वलम्बितसूत्रेणेति–ऊर्ध्वलम्बितसूत्रेण स्थितेः समतासमी-क्षणं शिल्पानभिज्ञस्य तस्य दुरवगाहम् । परिवारकल्पनमिति–अत्र सप्तम्यन्तः पाठः अनन्वितः । दिनत्रयमिति एकबेरप्रतिष्ठानन्तरं दिनत्रयं यावत् गर्भ-मन्दिरद्वारस्य पिधानं देवर्षिपितृसिद्धादीनामाराधनौपयिकतया शास्त्रे विधीयते । लोके त्वाचारपदादयं सम्प्रदायः निष्क्रान्त इव । कुत्रापि तथा-ऽदर्शनात् । बहुबेरप्रतिष्ठायां तु समुदाचारोऽयं शास्त्रेणैव निषिद्धः । बहुबेर-प्रतिष्ठाणामेव बहुलतया तत्सादृश्येन एकबेरप्रतिष्ठायामप्ययं समयः नाद्रियमाण इव ।

गर्भगेहस्य द्वेधा विभागः समुपलभ्यते । ब्राह्म–दैव–मानुष–पैशा-

चाख्याः चत्वारः भागाः प्रथमकल्पे भवन्ति। द्वितीयकल्पे ब्राह्म–दैव–पैतृक–मानुष–पैशाचाख्याः पञ्चभागाः। पैतृकभागः अधिकतया द्वितीय-कल्पे भवति। मुक्तिकामश्चेत्साधकः ब्राह्मे, भोगाभिलाषी चेद्दिव्ये, सन्तानार्थी चेन्मानुषे। पश्वादिकामश्चेत्पैशाचे स्वामिनं प्रतिष्ठाप्यार्चयेदिति शास्त्रपरिपाटी[40]।

दैवे इति—अत्र दैवमिति भ्रामकः पाठः। रत्नन्यासः नपुंसक-शिलायामेव कार्य इति नियमः। कर्मार्चेति-कौतुकार्चेति यावत्। उत्सवादि-विम्बं व्युपादयति उत्सवाद्यर्थबिम्बानीति—एतेन बलि-तीर्थ-शयनबिम्बानि व्याख्यातानि।

स्थापक इति—यः पूर्वं देवस्य प्रतिष्ठापक आचार्यः तद्वंश्यैः परम्परायातैः गुणरहितैरपि क्रियमाणमर्चनं भगवते प्रीतिकरं सम्पद्यते। न कथंचिदपि ते निष्कासनीयाः।

प्रतिष्ठाविधिरार्येण साङ्गोपाङ्गो निरूपितः।
अष्टादशे परिच्छेदे वराहगुरुणा क्रमात्॥

---

# एकोनविंशः परिच्छेदः

एवं महाप्रतिष्ठां साङ्गोपाङ्गां निरूप्य मत्स्यादिविभवमूर्तीनां स्वतन्त्र–परतन्त्रलक्ष्म्योश्च प्रतिष्ठाविधिं प्रतिपादयितुमारभते अथेति - परित्रातेति । खलान् द्विषन्तीति खलद्विषः । सज्जनाः देवादयः । परित्राताः खलद्विषः येन तथोक्तः । अत्र खल इति पाठस्साधीयान् । वञ्चिताशेष-दानवेति—अत्र मानव इति पाठः अनन्वितः । लक्ष्यविरुद्धार्थप्रतिपादन-परत्वात् ।

'ब्राह्मे कर्मार्चा' इत्यारभ्य 'स्थापयेदि' त्यन्तः भागः असाम्प्र-तिकः । अयं वराहगुरोर्मूलानुविधेयतामावेदयति । उपशताक्षरं वाक्य-द्वयमिदं पाद्मक्रियापादैकोनत्रिंशाध्यायगतानां (३७-३८-३९) त्रयाणां श्लोकानां अक्षरार्थमुपवर्णयति । पर्यालोचने क्रियमाणे नायं विभवमूर्ति-मात्रपर्याप्तः विषय इति स्पष्टीभवति सम्प्रदायविदाम् । अन्यच्च अत्र-त्यानां पदानां प्रक्षिप्ततया पदार्थानामपि विशकलिततानान्तरीया समजनि । स्यादिदं श्लोकत्रितयं प्रक्षिप्तमथवा प्रक्षिप्तपदसङ्कुलं भ्रामकं चेति दिक् ।

मत्स्यादिमूर्तीनां स्थानाधिपदेवतारूपेण नैव स्थापनमिति हेतोः, लोहबिम्बानां च जङ्गमतया च षोडशन्यासस्तेषु नेष्यत इति राद्धान्तः । अचलबेरस्य, तत्रापि प्रधानदेवस्यैव षोडशन्यासः, चतुर्थस्नपनं च भवेताम् । अधिवासादिकं तु तत्तद्बिम्बयोग्यतानुरोधं सर्वेषामप्यनुष्ठेयमेव । प्रतिष्ठा-नन्तरं चतुर्थेऽह्नि क्रियमाणस्य स्नपनस्य चतुर्थस्नपनमिति पाञ्चरात्रिकाणां परिभाषा ।

प्रथमगोपुरद्वारे इति–अत्र प्रथमादिपदानां तत्तदावरणार्थकता वक्तव्या । विष्वक्सेनस्थाने पञ्चमावरणे सोमेशयोरन्तराले विष्वक्सेनः स्थापनीय इति शास्त्रविदः । स्वतन्त्रलक्ष्म्यालये तत्र विष्वक्सेनप्रतिनिधित्वेन नाम्ना चतुर्भुजा उक्तलक्षणा स्थापनीयेति विशेषः । विष्णुतिलके तु तस्याः वेत्रवतीति नाम दृश्यते[41] ।

मत्स्यादिकानां मूर्तीनां श्र्यादीनां च यथाक्रमम् ।
स्थापनं प्रोक्तमेकोनविंशेंऽशेऽस्मिन् यथाविधि ।।

---

## विंश: परिच्छेद:

लोकोज्जीवनहेतुकः भगवतः पाणिग्रहणमहोत्सवः । प्रतिष्ठानुपदमेवाद्यापि 'शान्तिकल्याणम्' इति नाम्ना क्रियत एवायमुत्सवः ।

'यस्यावतारदिवसे तस्य कल्याणमाचरेत्' इति[42] शास्त्रानुरोधं तत्तदवतारदिवसे च प्रतिवर्षमनुष्ठीयते । सम्प्रति प्रतिष्ठाङ्गभूत एवाऽयमत्र निरूप्यते । कल्याणमण्डपमिति यदद्यापि सुप्रथितं तदेवोच्यते वैवाहिकसदनमिति । वेदादिनेति–अत्र वेदादिरित्यनेन प्रणवः कथ्यते । 'प्रणवश्छन्दसामिव' इत्यादिभि[43] स्सुप्रथितोऽयं विषयः लौकिकानामपि । मदीयामिति—यजमानगोत्रनाम्ना देव्याः प्रवरादिकं वक्तव्यमित्यनुशास्ति भगवान् स्वयमेव । यथा–'स्वगोत्रनाम्ना कथितामिमां श्रियमनुत्तमाम्' (९–३० पा.क्रि.) 'मदीयगोत्रजां कन्यां देवीम्' (५८९ विष्णुति.) इति । प्रजासहत्वकर्मभ्य इति–प्रजाभ्यः सहत्वकर्मभ्यश्च प्रतिपादनमिदम् । प्रजाऽत्र धर्मप्रजाऽभिप्रेता । 'सहभावः सहत्वं, तद्येषु विद्यते तानि सहत्वकर्माणि ।

नेयस्थालीपाक, पार्वणस्थालीपाकाऽऽतिथ्यादीनि' इति बोप्पनभट्टीयसूत्रे र्थखण्डेऽभिहितम् । तदर्थः कन्याप्रतिग्रहः न दोषायेत्यार्षः सम्प्रदायः । एव 'पाणिग्रहणाद्धि सहत्वं कर्मस्वि' ति लोकप्रसिद्धिः, लौकिकस्समन्व-यम् । जगन्मातापितृभूतयोः देवीदेवयोः विषये चायमौपचारिकः गः । अथवा जीवानुग्रहार्थं, लोककल्याणाभिवृद्धयर्थमिदं प्रतिपादन-प्यपि वक्तुं शक्यते । प्रजास्सहत इति प्रजासहः, तस्य भावः प्रजासहत्वं, नापराधमर्षणम् । तदौपयिकानि कटाक्षमन्दस्मिताभयदानप्रार्थनादीनि णि, तदर्थं देव्याः प्रतिपादनमित्यन्या सरणिः ।

प्रतिपादयामीति–ददामीत्यर्थः । विनिवेश्येति–प्राचीमभि स्थाप-त्वेति यावत् । आघारमिति—स्रुचा चतुर्वारमाज्येन स्रुवं सम्पूर्य र्ऋयादीशानान्तं प्रजापतिमन्त्रेण[44] तथैव पुनः वायव्याद्याग्नेयान्तं इन्द्र-न्त्रेण च आज्यधाराया आहरणं प्रक्षेपणं आघारहोम इत्यभिधीयते[45] ।

अत्र सम्प्रत्याचारपदारूढं लोके प्रसिद्धं माङ्गल्यधारणं विष्णु-लकोक्तं ग्रन्थकृता परित्यक्तम् । सन्दर्भेऽस्मिन् अक्षरशः विष्णुतिलक-सरता तत्परित्यागः नोचित इव प्रतिभाति । अहर्निशमिति—प्रातस्सा-ालयोरिति । मूलमन्त्राभ्यामिति—अष्टाक्षरीमन्त्रेण, स्थानाधिपमन्त्रेण । तुरीयदिनापररात्रौ कर्तव्यं शेषहोममुपदिशति हुत्वेति । तत इति–इदं नुष्ठानान्तरशान्तिकल्याणम् । एतदनन्तरं देवालये नित्यं भगवन्तमर्चये-दिति भावः । जामदग्न्यादीति–जमदग्नेः अपत्यं पुमान् जामदग्न्यः परशु-रामः । स आदिर्येषां ते जामदग्न्यादयः । श्रीरामबलरामकृष्णादयः । तेषां र्यः सीता–रेवती–रुक्मिण्यः । तासामुद्वाहः स्मृत्युक्तवर्त्मना स्वसूत्रोक्त-र्गेण लौकिकपथा कार्यं इति भावः ।

श्र्यादिभिस्सह देवस्य पाणिपीडनमङ्गलम् ।
परिच्छेदे हि विंशेऽस्मिन् दीक्षितेन प्रदर्शितम् ॥

——

# एकविंशः परिच्छेदः

प्रतिष्ठाङ्गतया प्रसक्तं पाणिग्रहणविधिं निरुच्य तदनु विमानप्रतिष्ठाविधिमुपपादयितुं प्रक्रमते अथेति-प्रतिष्ठोपयोगितया अष्टानामेवोपादेयतया अष्टधान्येति । नवरत्नेत्यत्रापि अष्टरत्नेत्येव सम्यक्तरः पाठः । अष्टानामेवोपादेयतायाः प्रागुपन्यस्तत्वात् । अष्टमङ्गलेति—श्रीवत्स–पूर्णकुम्भ–भेरी – दर्पण–मत्स्ययुग्म–पाञ्चजन्य–चक्र–गरुडरेखाचित्रवन्ति तालमात्रायतानि तदर्धविस्तृतानि लोहमयानि दारवाणि वा फलकान्यष्टमङ्गलानीत्युच्यन्ते । उपस्थाय=ध्यात्वेत्यर्थः ।

वेदानिति–ऋगादीन् चतुरो वेदानिति भावः । अष्टादशाङ्गकल्पने त्विति–अत्र मूले पञ्चैवाङ्गान्युपन्यस्तानि । पूर्वोक्तैः द्वादशाङ्गैस्सह सप्तदशाङ्गान्येव भवन्ति । अतः पञ्चदशाङ्गमेवं मूले योजनीयं 'ओं महीशक्त्यै स्वाहा शिलायामि' ति । सहस्रशीर्षं पुरुषमिति'–पूर्वोक्त (P. 104) 'सहस्रशीर्षमिति गाथानुरोधं ध्यात्वेति भावः ।

प्रतिष्ठाविधिरत्रोक्तो विमानस्य विलक्षणः ।
एकविंशे परिच्छेदे वराहेण विपश्चिता ॥

## द्वाविंशः परिच्छेदः

विमानप्रतिष्ठां निरूप्य तदनु मण्डपास्थानमण्डपगोपुरादीनां प्रतिष्ठापद्धतिं निरूपयितुमुपक्रमते अथेति । मण्डपपदं च यौगिकरूढम् । मण्ड्यते अलंक्रियते जनैरिति मण्डपः । मडि=भूषायाम् । रूढ्या च देवोपयोगिनिर्माणविशेषमभिधत्ते ।

पुरस्तात्तन्त्रपूर्वकमिति – अग्निसंस्कारप्रसङ्गे पूर्वानुष्ठितक्रियानुष्ठानपुरस्सरमिति भावः । सद्यो वेति–एकाहानुष्ठाने उक्तपूर्वं सर्वमपि कर्मजातं सद्य एवानुष्ठेयमिति ।

मण्डपादेः प्रतिष्ठायाः पद्धतिं प्राह देशिकः ।
द्वाविंशेऽस्मिन् परिच्छेदे गोपुरादेश्च सक्रमाम् ॥

---

## त्रयोविंश: परिच्छेद:

मण्डपादिप्रतिष्ठानिरूपणानन्तरं बलिपीठनिर्माणं, तत्प्रतिष्ठां, महानस-धान्याद्यगार-वापीकूपतटाकप्रतिष्ठां च विशदयितुमुद्युंक्ते। अथेति। अत्राष्टविधं बलिपीठं निरुक्तम्। उत्तमोत्तमं तु साम्प्रतं मृग्यमेव। गोपुरास्थानमण्डपयोरिति—आपातत इयमुक्तिः। बलिपीठास्थानमण्डपयोर्मध्ये ध्वजपीठवैनतेयादिमन्दिरयोर्निर्माणस्य विहितत्वात्। संस्थापयेदिति–एवं देवालयस्य परितः पूर्वाद्याशास्वष्टस्वपि बलिपीठानि शास्त्रमर्यादापरिपालनैदम्पर्येण निर्मितेषु केषुचिदेव स्थलेषु दरीदृश्यन्ते। बहुत्र दुर्लभान्येव।

पश्चिमभागे इति–देवः पूर्वाभिमुख इत्यभिप्रायेणेदम्। पूर्वाभिमुखे इति–देवः यां दिशमभितः विलसति तस्याः दिशः अप्राचीत्वेऽपि देवप्राचीति व्यवहारः। तदनुरोधेनैव अन्या दिश ऊहनीयाः। श्रपणं—पचनमिति यावत्। सारस्वतगृहेति – बहुविधसौकर्यसौविध्यविभासुरे साम्प्रतिकेऽपि समये यन्मृग्यतया विषयो भवत्याधुनिकदेवालयेषु तत् सारस्वतगृहम्। तत्र सर्वं वैदिकसाहित्यं पुरा भूर्जरतालपत्रादिषु संग्रथितं संरक्षितम्। जाते संशये भट्टाचार्य इतरैः पण्डितैस्सह शास्त्रचर्चां तत्र प्रवर्त्य सिद्धान्तमुपस्थापयति स्म। वाप्यादीनिति–वापीकूपतटाकादीनित्यर्थः। निक्षिप्येति—सालग्रावमपि निक्षेप्यमिति विष्णुतिलके[46]।

प्रतिष्ठा बलिपीठादेः धान्यागारस्य च क्रमात्।
बापीकूपतटाकानां त्रयौविंशे निरूपिता।

---

## चतुर्विंश: परिच्छेद:

देवालयाङ्गभूतबलिपीठादिकस्य प्रतिष्ठां निरूप्य अर्चनाद्यङ्गभूत प्रभा—पीठ—घण्टा—धूप—दीपाक्षमालादीनां प्रतिष्ठाविधिमुपपादयितु-मारभते अथेति–धूपं=धूपपात्रं, दीपं=दीपपात्रमित्यर्थः। अक्षमालेति - अक्षैः गुम्फिता माला अक्षमाला। अक्षास्थितुल्यानिति—अक्षं=पद्मं, तस्य अस्थि=बीजं तत्सदृशानिति। अथवा अक्षं=विभीतकफलं तस्यास्थि =बीजं तत्सदृशानिति। मणिमिति—मौलिस्थितस्य तस्य मणेः मेरुरिति परिभाषा मन्त्रशास्त्रतत्त्वविदां पाञ्चरात्रिकाणाम्। तत्रेति–अक्षमाला-याम्। तमेवेति–यं वा मन्त्रं प्रथमतः मालायां स्थापितवानाचार्यः तदनुष्ठान एव सा माला समुपयोज्या। नान्यमन्त्रानुष्ठाने।

अक्षास्थिमात्रमणिनिर्मिता माला उत्तमा। धात्रीफलास्थिमात्र-मणिनिर्मिता मध्यमा। बदरास्थिप्रमाणमणिकल्पिता अधमा। अष्टोत्तर-शतसंख्याकमणिसंकलिता माला उत्तमा। चतुःपञ्चाशत्संख्याकमणि-संदृब्धा मध्यमा। सप्तविंशत्यक्षपरिमिता अधमा इत्यक्षमालाभेदः तत्परिमाणसंख्यानिबन्धनः। रत्नविनिर्मिता माला स्वर्गापवर्गदा। स्वर्णमयी भगवत्सेवाप्रदा। रजतनिर्मिता कीर्तिधनदा। ताम्रनिर्मिता शान्तिकरी चेति सम्प्रदायः[47]।

प्रभापीठाद्यक्षमालाप्रतिष्ठाणां विधिं क्रमात्।
चतुर्विंशे परिच्छेदे वराहगुरुरब्रवीत्॥

——

# पञ्चविंशः परिच्छेदः

अर्चनौपयिकवस्तुजातस्य विविधस्य प्रतिष्ठां विशदीकृत्य सम्प्रति गृहार्चा — श्रीवत्स — कौस्तुभ — वनमाला—किरीट पञ्चायुधादीनां प्रतिष्ठाविधिं निर्देष्टुमुपक्रमते अथेति —

संहारशयनेति—संहारशयनमूर्तेः[28] अत्युग्रतया गृहे तदाराधनं न क्षेमायेति तन्निषेधः। प्रतिमास्थापनस्थाने इति—स्थावरबिम्बाभिप्रायेणेदम्। जङ्गमस्य चेदिति—स्थावरं दारवं बिम्बं जङ्गमं च लोहमयं बिम्बं कैश्चिद् गृहेष्वर्चनार्थं स्थाप्यते। कैश्चिदुभयमपि दारवं लोहमयं वा। सशाटिके इति—सवस्त्रे इत्यर्थः।

स्वमन्त्रेणेति — कौस्तुभमन्त्रेणेति। चतुर्णामिति। शङ्ख — कौमोदकी—शार्ङ्ग—नन्दकानां चतुर्णामायुधानामिति भावः। बीजयुक्तेनेति —बीजाक्षरसहितेनेति यावत्। बीजमन्त्राणां तदितरापेक्षया निरतिशयप्रभाविता मन्त्रिणामपरोक्षा। श्रीपाञ्चरात्रभगवच्छास्त्रे बीजमन्त्राणामेव प्रधानतयोपयोगः। अणीयसि बीजे महती शक्तिः निक्षिप्तेत्यार्षेण चक्षुषा समुपलक्ष्य दयमानमानसाः लोकानुजिघृक्षया तानुदादिक्षत् महर्षयः।

युग्मास्वेवेति—भक्तप्रतिष्ठायां घटिकाशरावयोर्निषेधः। वेदिकाधिवासनेति—भगवत इव भक्तानां वेदिकायां शय्याधिवासः न कर्तव्यः। तथा करकं, मूर्तिकुम्भाष्टकमपि न कल्पनीयम्। सुदर्शनस्य विष्ण्वादिमूर्तीनां चावाहनप्रसक्त्यभावात्। प्रधानकुम्भ एक एव कल्पनीयः।

गृहार्चाभूषणादीनां चक्रादेश्च गुरोस्तथा ।
भक्तादीनां प्रतिष्ठा च पञ्चविंशे निरूपिता ।।

---

## षड्विंशः परिच्छेदः

अथ गृहार्चादिप्रतिष्ठापद्धतिं निरूप्य तदनु परमैकान्तिकत्व-सिद्धयर्थं यजनयोग्यतावाप्तये च दीयमानां चक्राब्जमण्डलदीक्षां प्रतिपाद-यितुमारभते अथेति ।

गोकर्णयुग्मेनेति—अङ्गुष्ठानामिकोन्मानस्य गोकर्ण इति व्यवहारः । तद्युग्मेनेति यावत् । 'अङ्गुष्ठानामिकोन्माने गोकर्णः' (७१–णान्त) इति विश्वकोशः । गोकर्णाकृतिरत्रास्तीति गोकर्णः । वितस्ति-भ्यामिति–अङ्गुष्ठकनिष्ठिकोन्मानस्य द्वादशाङ्गुलमितस्य वितस्तिरिति व्यपदेशः । 'स कनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः' (३४२-२) इत्यमर-वचनात् । वितस्यति हस्तापेक्षया उपक्षीयत इति वितस्तिः । तसु=उपक्षये । प्रादेशद्वयेनेति – अङ्गुष्ठतर्जन्युन्मानस्य प्रादेश इति नाम । प्रदिश्यते परिमीयत इति प्रादेश. । दिश=अतिसर्जने । प्रादेशतालगोकर्णाः तर्जन्यादियुते तते' (३४२-२) इति नामलिङ्गानुशासनात् ।

पञ्चरत्नैरिति । मरकत–नील-गोमेधिक–पुष्यराग–वैडूर्याख्यानि अश्मजातीनि रत्नानि पञ्चरत्नानीत्युच्यन्ते । उत्तरादिद्वारेति–ननु प्राच्या-दिक्रमं परित्यज्य कुत उत्तरादिक्रमानुधावनमिति चेत् - न, 'सौम्यं स्याद-ग्रजन्मनाम्' इत्यारभ्य उत्तरादिचतुर्द्वारेषु ब्राह्मणादितत्तद्यजमानानुगुण्येन क्रमेण शुक्लपीतकृष्णवर्णानां पूरणस्य विहितत्वात्[49] । मन्त्राध्वानमिति - श्रीपाञ्चरात्रशास्त्रे भट्टाचार्यस्य षडध्वज्ञ इति वर्तते किञ्चिद्विशेषणम् ।

अध्वानस्ते च षडत्र स्पष्टतया प्रतिपाद्यन्ते मन्त्र - तत्त्व - वर्ण - पद – कला – भुवनाख्याः ।

तत्त्वाध्वार्चनमिति पाञ्चरात्रशास्त्रे प्रतिपादितानि[50] तत्त्वान्येकपञ्चाशत्संख्याकानि । तानि च पुरुष (जीव) प्रकृति महत् (बुद्ध) अहङ्काराः, पञ्च तन्मात्राणि, पञ्च महाभूतानि, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणीत्याहत्य पञ्च विंशतिः जीवतत्त्वानि । माया-काल-कला-राग-विद्या-नन्द-महानन्द-महाविद्या-क्षेत्रज्ञ-शिव-ब्रह्म-बद्ध (पुरुष)-सत्य-अच्युत-अनन्त-विष्णु-सर्व- निवृत्ति-विश्व-पुरुष-परमेष्ठि-अनिरुद्ध - प्रद्युम्न — सङ्कर्षण- वासुदेव — पर-वासुदेवाख्यानि षड्विंशतिश्चेत्यनवयवेन एकपञ्चाशत्तत्त्वानि परमात्मनः ।

पुरुषः जीवः, प्रकृतिः प्रकर्षेण करोति कार्यमुत्पादयतीति । प्रकर्षश्च तत्त्वान्तरारम्भकत्वम् । अव्यक्तं, प्रधानं, प्रकृतिरित्यनर्थान्तरम् । महत्तत्त्वमेव बुद्धिरित्यपि व्यपदिश्यते । परिणामवादिनां सांख्यानां पञ्चविंशतित्त्वव्यवस्थापनं चैतच्छास्त्रप्रतिपादिततत्त्वसमाकलन-निबन्धनम् । जागर्ति चानयोश्शास्त्रयोर्महान् भेदः बहुषु स्थलेषु । अथैवं स्थिते प्रकृतिस्थाने प्राणपदं किं मूलकारेण निवेशितमाहोस्वित् गच्छति काले शास्त्रतत्त्वमनवगच्छद्भिः यैः कैश्चित्प्रक्षिप्तं वेति जायते सन्देहः नाद्यः, सुविदितशास्त्रतत्त्वतया मूलकारस्य तथाकरणायोगात् ।

स्यान्नाम कदाचित् द्वितीयस्यावकाशः । अपि च प्रयोगनिर्माणे यावदुपलब्धि पाद्मसंहितामनुरुन्धानेन वराहगुरुणाऽत्र परमात्मनः रूपत-स्त्वनिरूपणावसरे कुतः पाद्मोक्ततत्त्वपरित्यागः कृत इति चिन्त्यम् । तत्प्रतिपादितेषु तत्त्वेषु मृग्यमेवौचित्यम् ।

स्वमन्त्रेणेति – स्वानुष्ठानप्रधानमन्त्रेण अष्टाक्षर—द्वादशाक्षरा-दिना । मायासूत्रेणेति–मायानिर्मूलकं सूत्रं मायासूत्रम् । सत्त्वरजस्तमोगुण-मयी हि माया । सैव पाशः सांसारिकः । अत एव तन्तूनां शुक्लकृष्णरक्त-वर्णत्वं त्रिगुणीकरणं चोपर्युक्तगुणत्रितयप्रतिनिध्यभिप्रायेण । पञ्चविंशति-संख्ययेति—पञ्चविंशतिवारं शिखादिपादान्तमावेष्ट्येति यावत् । माषोद-

नेनेति—सन्दर्भेऽस्मिन् भूतेभ्यः माषोपसम्मिश्रौदनस्यैवोपहर्तव्यतया समुपदिष्टत्वात् । पूर्ववदिति—स्वमन्त्रेणेति यावत् । पञ्चविंशतिधेति—पञ्चविंशतितत्त्वगतमायापाशच्छेदनज्ञापनाय तथा च्छेदः । प्रकृत्यादीनिति–पुरुष (जीव) प्रकृति–महत्–अहङ्कार–मनः– शब्दस्पर्शरूपरसगन्धतन्मात्र —आकाशवाय्वग्न्यापःपृथिव्याख्यभूत— त्वक्चक्षुश्श्रोत्रजिह्वाघ्राण — वाक्पादपाणिपायूपस्थाख्यानि पञ्चविंशतिजीवतत्त्वानीत्यर्थः । अनवयवेन पञ्चविंशतितत्त्वगतमायापाशदाहोद्देशेन तेषां होमः । तत्त्वसृष्टीति—मायारहित शुद्धसत्त्वमयतत्त्वानां सृष्टिरत्रोद्दिष्टा । तावतीः अष्टोत्तरशताहुतीः तन्मन्त्रेण महाव्याहृतिमन्त्रेण ।

भागवत इति--ब्राह्मणस्येति भावः । विष्णुहस्तमिति—चक्राब्जमण्डलावाहनवशात् स्वहस्तस्य विष्णुहस्तत्वभावना गुरोरिति भावः । आचार्यमिति–अच्युतपदप्राप्तेः शास्त्रार्थविबोधस्य चाऽचार्यानुग्रहद्वारकतया आचार्यस्याभ्यर्हितत्वम् । भगवद्ध्यानेति-स्वशेषतैकरूपभगवत्कैंकर्यौपयिकाभिगमनोपादानेज्यास्वाध्याययोगाख्यपञ्चकालकर्तव्येषु निरन्तरतत्परताभिनिवेशः परिपालनीय इति भावः ।

चक्राब्जरचना तत्स्थदेवानां च निरूपणम् ।
दीक्षाविधिश्च षड्विंशे भट्टाचार्येण दर्शिताः ।।

---

# एकपञ्चाशत्तत्त्वानि

## 1. परमपुरुषः

| क्रमः | बीजानि | प्रत्यगात्मोपयोगि भौतिकशरीरे | अवस्था |
|---|---|---|---|
| २. | मं | जीवः | तुरीया |
| ३. | भं | अव्यक्तः | सुषुप्तिः |
| ४. | बं | बुद्धिः | स्वप्नः |
| ५. | फं | अहङ्कारः | स्वप्नजाग्रत् |
| ६. | पं | मनः | बीजस्वप्नः |
| ७. | नं | शब्दः | जाग्रत्स्वप्नः |
| ८. | कं | आकाशः | ,, |
| ९. | णं | श्रोत्रम् | ,, |
| १०. | ञं | वाक् | ,, |
| ११. | धं | स्पर्शः | महाजाग्रत् |
| १२. | खं | वायुः | ,, |
| १३. | ढं | त्वक् | ,, |
| १४. | झं | पाणिः | ,, |
| १५. | दं | रूपम् | बीजजाग्रत् |
| १६. | गं | तेजः | ,, |
| १७. | डं | नेत्रम् | ,, |
| १८. | जं | पादः | ,, |
| १९. | थं | रसः | जाग्रत् |
| २०. | घं | आपः | ,, |
| २१. | ठं | जिह्वा | ,, |
| २२. | छं | वायुः | ,, |
| २३. | तं | गन्धः | जाग्रन्मोह |
| २४. | ङं | पृथिवी | अज्ञान |
| २५. | टं | घ्राणम् | अन्यथाज्ञान |
| २६. | चं | उपस्थम् | विपरीतज्ञान |

| क्रम: | परमात्मोपयोगि ज्ञानशरीरे | अवस्था |
|---|---|---|
| २७. | वासुदेब: | भगवन्निष्ठा |
| २८. | सङ्कर्षणः | स्वस्वरूपनिष्ठा |
| २९. | प्रद्युम्नः | पदार्थानुभाविनी |
| ३०. | अनिरुद्धः | असंसक्तता |
| ३१. | क्षेत्रज्ञ: | निरभिमानता |
| ३२. | सत्यः | शुद्धसत्त्ववृद्धिः |
| ३३. | परमेष्ठी | " |
| ३४. | महाविद्या | " |
| ३५. | विद्या | " |
| ३६. | अच्युतः | तनुमानसा |
| ३७. | पुरुषः | " |
| ३८. | महानन्द: | " |
| ३९. | कला | " |
| ४०. | शिव: | तत्त्वजिज्ञासा |
| ४१. | विश्वः | " |
| ४३. | नन्दः | " |
| ४३. | रागः | " |
| ४४. | विष्णु: | शुभेच्छा |
| ४५. | सर्वः | " |
| ४६. | अनन्तः | " |
| ४७. | कालः | " |
| ४८. | ब्रह्मा | सद्भावना |
| ४९. | निवृत्तिः | सत्सङ्गरुचिः |
| ५०. | बद्धः | सदभिमुखः |
| ५१. | माया | सदद्वेषः |

## सप्तविंशः परिच्छेदः

अवाप्तचक्राब्जमण्डलदीक्षाणामेव भागवतत्वप्राप्तिः परार्थयजनाधिकारश्चेति मनसिकृत्य दीक्षाविधेरनुपदं समाराधनविधिं व्याख्यातुमुपक्रमते अथेति—

स्नानेष्विति—स्नात्यनेनेति स्नानम् । ष्णा=शौचे 'आप्लाव आप्लवः स्नानम्' इत्यमरः (३८१-२) । अत्रोपपादितानां सप्त स्नानानां स्वरूपमित्थं विज्ञेयम् । अप्स्ववगाहनपूर्वकं क्रियमाणं वारुणस्नानम् । इदमवगाहस्नानमित्यप्युच्यते । आतपेन वर्षेण वा क्रियमाणं दिव्यस्नानम् । हुतानां समिधां, गोमयस्य वा भस्मना यदूर्ध्वपुण्ड्रकरणं तदाग्नेयस्नानम् । गोषु गच्छत्सु तत्पादरजसा वपुषः स्पर्शः वायव्यस्नानम् । प्रशस्तश्वेतमृदा ललाटादिषु केशवाद्युच्चारणपुरस्सरं द्वादशोर्ध्वपुण्ड्रधारणं पार्थिवस्नानम् । अब्लिङ्गमन्त्रैः जलेन प्रोक्षणं मान्त्रस्नानम् । आचमनप्राणायामपूर्वकं भगवतः ध्यानं मानसस्नानम् । उपकरणानुरोधी विभागोऽयम् । अशक्ततायां सौकर्याभावे च कार्यं गौणस्नानं कण्ठ–कापिल–आमय–मान्त्रस्नानभेदेन चतुर्विधमिति विष्णुतिलके समुपदिष्टम्[51] । रोगिणा शिखां विना उष्णोदकेन वा क्रियमाणं कण्ठस्नानं, केवलार्द्रवस्त्रमार्जनमामयस्नानं, उपद्रवे नाभिजंघोरुगुह्यानां क्षालनं कापिलस्नानं, अशक्तेनानुष्ठीयमानं प्रोक्षणं मान्त्रस्नानम् । शास्त्रेऽस्मिन्नुपदिश्यमानानां क्रियाणां स्नानमूलकतया आत्मनः शक्तिं देशकालौ चानुसृत्य उपर्युक्तेष्वन्यतमं स्नानमवश्यविधेयम् ।

अधिवलजमिति—वलजे इति अधिवलजं, द्वारसमीपे इत्यर्थः ।

अत्राभीत्युचितम् । तालत्रयमिति–अयं क्रमः–दक्षिणहस्तेन वामं संताड्य, वामहस्तेन दक्षिणं, पुनः दक्षिणेन वाममिति तालानां त्रितयम् । तालमेकं मरणप्रदं, तालद्वयं व्याधिपीडाकरं तालत्रयं सुखावहमिति विहगेन्द्र-संहिता[52]। उत्तमत्रयेति–गेहं शिलामयं उत्तमं, इष्टकामयं मध्यमं, दारुजं अधमम् । कवाटत्रयं च अर्धमण्डप–अन्तराल-गर्भालयकवाटत्रयमित्यर्थः । गर्भगृहद्वारेति-गर्भगृहद्वारस्य दक्षिणभागावथिस्तं यत् स्वब्रह्मसूत्रं तस्माद्दक्षिणभागेनेत्यर्थः । अर्थात् द्वारदक्षिणार्धेनेति यावत् । प्राचीनयोग्योपास्येति-अत्र प्राचीनयुक्त्योपास्येति साधीयान् प्रयोग इव ।

त्रिगुणात्मिकामिति–'प्रकृतिस्त्रिगुणा ब्रह्मन्ननादिरविनाशिनी'[53], सत्त्वरजस्तमोरूपगुणत्रयवती प्रकृतिरिति भावः । सप्तधात्विति–रस–रक्त–मांस–मेदः–अस्थि–मज्जा–शुक्राख्या देहवर्धका धातवः तन्मयमिति भावः । षण्णवत्यङ्गुलेति–पूर्वोक्तरीत्या (P. 133) पद्मस्वस्तिकान्यतरासनेन आसीन इत्यभिप्रायेणेदम् । अयुतेति–दशसहस्रचन्द्रतुल्यकान्तिमिति । नियुतैरिति––लक्षसंख्याकैः सूर्यैरित्यर्थः । द्विषाक्षरमिति–द्विषडक्षरमिति वक्तव्ये छन्दोऽनुरोधेन तथा वचनम्, द्वादशाक्षरमन्त्रेणेति यावत् ।

मानसयाग इति––मनसा ध्यानयोगेन अनुष्ठीयमानः यागः उपासना मानसयाग इत्यभिधीयते । अयमेवान्तर्यागः ।

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति' इति भगवद्गीतोपबृंहितोऽयं (२६-४) सिद्धान्तः । अन्तर्बहिर्यागनिबन्धनमिदं भगवदाराधनं ज्ञानयज्ञद्रव्ययज्ञरूपं भवितुमर्हति । तत्सम्यग्व्युत्पादितं[54] श्रीभाष्यकारैः स्वगीताभाष्ये 'कर्मण्यकर्म यः पश्येदिति (१८-४) श्लोकभाष्यमुखेन यथा—

'क्रियमाणमेव कर्म आत्मयाथात्म्यानुसन्धानेन ज्ञानाकारं यः पश्येत्, तच्च ज्ञानं कर्मयोगान्तर्गततया कर्माकारं यः पश्येत्' इति ।

अन्यत्र च—

'उभयाकारे कर्मणि द्रव्यमयादंशात् ज्ञानमयोंशश्श्रेयान् । सर्वस्य कर्मणः तदितरस्य चाखिलस्योपादेयस्य ज्ञाने परिसमाप्तेः तदेव सर्वैः साधनैः प्राप्यभूतं ज्ञानं कर्मान्तर्गतत्वेनाभ्यस्यते' (भग· ३३-४)

इति मानसयागप्रामुख्यं च । अत्रायं मानसयागः त्रिविधः प्रतिपादितः लयभोगाधिकारभेदभिन्नः ।

भूतशुद्ध्यादिसंयुक्ता संगृहीताऽत्र सूरिणा ।
सप्तविंशे परिच्छेदे समाराधनपद्धतिः ॥

---

# अष्टाविंशः परिच्छेदः

अथ मानसक्रियानिबन्धनं मानसयागं निरूप्य बाह्येन्द्रियकरणकं बाह्ययागं प्रतिपादयितुमुपक्रमते अथेति—अगायि चेदमर्चनं भगवता स्वयमेव गीतासु यथा —

'दैवमेवापरे यज्ञं योगिनः पर्युपासते' (२-४४) इति। भाष्यकारैश्च—दैवं=देवार्चनरूपं यज्ञमपरे कर्मयोगिनः पर्युपासते=सेवन्ते। तत्रैव निष्ठां कुर्वन्तीत्यर्थः। इति स्वगीताभाष्यद्वारा निश्चप्रचम्।

गलन्तिकेति—गलत्यम्भः अस्या इति गलन्तिका। गल=क्षरणे। गल्—शतृ + ङीष्—नुम् + कन् + टाप् गलन्तिका। 'कर्कर्यालुर्गलन्तिका' इत्यमरकोशवचनात् (६०६-२)। वर्धनीति=वर्धते ताच्छील्येनेति वर्धनी, 'वारिधान्यां च वर्धनी' (७७—नान्त) इति विश्ववचनात् जलपात्रविशेषः। त्रिपादुकामिति—पादत्रयविशिष्टस्य पीठस्य त्रिपादुकेति व्यवहारः। यस्यां पश्चात् पाद्यादिपात्राणि निक्षिप्यन्ते। मध्यदक्षिणेति—पात्रस्थापनक्रमं निर्दिशति। मध्ये पाद्यपात्रं तद्दक्षिणतः अर्घ्यपात्रं वामत आचमनपात्रमिति क्रमोऽत्र लभ्यते। किन्तु नायं समग्रः पात्रनिवेशनप्रकारः, स्नानीयपात्रादीनामनिर्देशात्। अपि च सत्यप्यनुष्ठानभेदे आग्नेयादिषु कोणेषु चतुर्णां पात्राणां स्थापनं दरीदृश्यते। उपलभ्यन्ते च बहूनि प्रमाणानि तथाऽऽचरणस्य।

कुशाग्रेति—एषां पाद्यार्घ्याचमनीयद्रव्याणां शरीरस्य तत्तद्व्याधिनिवारकत्वम्। एतत्संहृत्य गुणसाम्यावस्थारूपप्रसन्नतापादनं मनसश्च सुलभमिति सोपष्टम्भं सुष्ठु प्रपञ्चितं पाञ्चरात्रतत्त्वार्थप्रपञ्चनव्यग्रैः

आयुर्वेदशास्त्रनिष्णातैरस्मत्तातपादैः[54]। वैकारिकेति=अहंकारः प्रथमतस्त्रिविधः[55]। वैकारिक—तैजस-भौतिक-भेदेन। पुनस्त्रिविधः[56] दर्प-क्रोध-दम्भभेदेन च। गन्धादिचतुर्भिः=गन्धपुष्पधूपदीपैरिति भावः। एकबेरेति-एकबेरे प्रतिष्ठितमूर्तावेव सकलन्यासपुरस्सरं पूर्णस्य तेजसः समुपलम्भात् ततः बेरान्तरे प्रत्यहं कर्तव्यस्यावाहनस्य न प्रसङ्गः। एवं सुरसिद्धावतारिते च मूर्तौ तेजःपौष्कल्यात् पुनरावाहनं विधेयम्। किंतु ध्यानमात्रमेव।

सन्मुख इति – अत्र सम्मुख इति पाठः साधीयान्। तथैव साम्मुख्यमुद्रेति च। अष्टाङ्गप्रणिपातेनेति = बाह्यः पञ्चाङ्गप्रणिपातः। आन्तरः शिष्टः। अत्र चोत्तरोत्तरप्रणिपातस्य समुत्कर्षः। तस्य बहुविधाभ्याससाध्यत्वात्। सहस्रधारयेति = सहस्रधारापात्रेणेति।

असंस्कृतैरिति – अत्र असंस्कृतैरिति पाठः 'प्रामादिकः। विरुद्धार्थत्वात्। सुसंस्कृतैरिति साधीयान्। अन्वारब्धेति = अन्वारब्धः सव्यः करः यं सः, तेन सव्यकरानुगामिना दक्षिणकरेणेत्यर्थः।

भूतेभ्य इति—बलिदान—नित्योत्सवयोर्भेद उपरिष्टात् त्रिंशव्याख्यानावसरे निरूपयिष्यते।

आत्मपूजनमिति – मन्त्रन्यास – मानस – बाह्य – यागादिभिः पारमैकान्त्यपराकाष्ठामुपेयिवांसं ह्यर्चकं साक्षाद्धरिमामनन्ति। अतः शिष्टैर्द्रव्यैः तत्पूजनमपि हरेः प्रीतये कल्पत इति तथा विधानम्।

प्रागुक्ताराधनाङ्गानि पाद्यार्घ्यादीनि षोडश।
अष्टाविंशे परिच्छेदे मन्त्रैः कारी व्यरीरचत्।

---

## एकोनत्रिंशः परिच्छेदः

मानसयागं बाह्ययागं च सम्यगुपदिश्य अग्निकार्यप्रक्रियामुपपादयितुमारभते अग्निकार्यविधिरिति –

अग्निद्वारा वा अग्नावेव वा क्रियमाणं कार्यं अग्निकार्यम् । तस्य विधिः । प्रोक्षणेति–जलेन सेचनं सपवित्रेण दक्षिणपाणिना उत्तानेन कृतं प्रोक्षणं, अर्वाचीनेन अवोक्षणं, मुष्ठीकृतेन अभ्युक्षणमिति विष्णुतिलके[57] । सूर्यकान्तेति–सूर्यकान्तमित्यभिधानवतः अश्मनः शिलाया आतपे तूलादिसंयोगे अग्निरुत्पद्यते । अघारं=आज्यमित्यर्थः । अङ्गुष्ठनहनं=अङ्गुष्ठविस्तारमिति यावत् । अवग्रहकारिणीति=अवग्रहं वृष्टिनिरोधं करोतीत्यवग्रहकारिणी । ह्रस्वाभिस्समिद्भिर्यत्र होमः तस्मिन् देशे वृष्ट्यभावः स्यादिति । कुक्कुटेति=प्रकरणानुचितमिदमुदाहरणम् । जम्बीरफलप्रमाणमित्यादि वक्तुमुचितमिति प्रतिभाति ।

अग्निकार्यविधिः प्रोक्तः साङ्गोपाङ्गः सविस्तरः ।
एकोनत्रिंशके पाञ्चरात्रशास्त्रोक्तवर्त्मना ॥

---

# त्रिंशः परिच्छेदः

अग्निकार्यविधिं प्रतिपाद्य तदनन्तरकर्तव्यां नित्योत्सवपद्धतिं व्याख्यातुमुद्युंक्ते नित्योत्सवविधिरिति –

अथ को नाम नित्योत्सवः ? नित्यं क्रियमाण उत्सव इति चेन्न। बलिहरणादेस्तत्रानन्तर्भावात् । नित्यमवश्यं पहर्तव्यबलिहरणदानपुरस्सरं क्रियमाण उत्सवः नित्योत्सवः। अथवा नित्यपदस्यैव नित्यानुष्ठेयबलिहरणमर्थः। तदर्थक उत्सवः नित्योत्सवः। अतः नित्योत्सवपदं न केवलं बलिहरणपरम्। नापि केवलं सामान्योत्सवपरम्, अपि तु बलिदानपुरस्सरं क्रियमाणोत्सवपरमिति निष्कर्षः।

अग्निपूजानन्तरमिति – नित्यहोमानन्तरमिति भावः। ननु 'त्रिसन्ध्यमथवान्नेन कुर्यान्नित्योत्सवं हरेः' (६–५ चर्या. पाद्म) इति बलिहरणविधेः पर्यायतया नित्योसवपदं शास्त्रेऽस्मिन् प्रयुक्तम्। अत्र तु 'बलिं दत्वा' 'पर्यटनं' चेति तद्विभिन्नतया प्रयोग उपलभ्यते। तत्कथमिति चेन्न नित्योत्सवावसरे बलिदारस्य क्रियमाणतया बलिदानावसरेऽवश्यं स्वामिनः बलिबिम्बस्य नित्यमुत्सवकरणाच्च। तयोर्नान्तरीयकताप्रयुक्त आपाततः पर्यायत्वेन प्रयोगः। वस्तुतः सूक्ष्मेक्षणिकया परीक्षायां क्रियमाणायां उत्सवस्य बलिदानस्य च जागर्ति तरां क्रियाकृतो भेद इति तथा प्रयोगात्। दरीदृश्यते च क्रियाभेदस्तत्रैव प्रकरणे यथा –

'विना बलिप्रदानेन नोत्सवोऽभ्युदयावहः' (१०-५ चर्या. पाद्म) इति । प्रथममेवेति—गृहार्चापेक्षया देवालयार्चायां देव तेजः पौष्कल्यस्य सुलभतया, व्यक्तिक्षेमापेक्षयः समाजक्षेमस्याभ्यर्हिततया च देवस्वपरिग्रहादिना परार्थयजनस्य सर्वप्रधानकर्तव्यत्वापाताच्च परार्थयजनानन्तरमेव स्वार्थयजनं कर्तुमुचितमिति राद्धान्तः ।

पञ्चस्वावरणेष्वार्यः नित्योत्सवविधिं क्रमात् ।
त्रिंशे निरूपयामास नृत्तगीतादिविस्तरम् ॥

---

## एकत्रिंशः परिच्छेदः

नित्योत्सवनिरूपणानन्तरं बहुभेदभिन्नं स्नपनं विधातुमुपक्रमते स्नपनविधिरिति–स्नपनं प्रथमतः द्विविधम्। केवलकर्माङ्गभेदेन। तत उत्तमोत्तम—उत्तममध्यम—उत्तमाधमादिभेदेन बहुविधम्। केवलं स्वतन्त्रम्। कर्माङ्गं अस्वतन्त्रम्। स्वतन्त्रे प्रतिसरबन्धाङ्कुरावापनादिकं भवेत्। कर्माङ्गे नित्ये वा न तेषां प्रसक्तिः।

चतुःस्थानार्चनमिति — कुम्भ — मण्डल—अग्नि—बिम्बानि चत्वारि स्थानानि भगवदर्चायोग्यानि। तद्गतस्य भगवतः क्रियमाणमर्चनं चतुःस्थानार्चनमिति जयाख्यसंहिता[59]। कूर्चादिष्विति—अत्रादिपदेन पादुकायामपि स्नपनं कार्यमिति लभ्यते। उपस्नानाम्बुभाजनमिति—घृतादितत्तद्द्रव्यस्नानानन्तरं गात्रस्नेहादीनां विघटनाय उष्णोदकाद्युपस्नानं विधीयते। तदत्राख्यायते उपस्नानाम्बुभाजनमिति। अलाभे इति–पञ्चगव्यानामलाभे तत्प्रतिनिधितया घृतमेकमेवोपयोज्यमिति विधीयते। अत्र अध—मध्यमोत्तमरूपविलोमविभागः उत्तरोत्तरस्य बहुव्ययप्रयाससाध्यतया पूर्वस्मिन्नादरः स्याद्बहूनामित्यभिप्रायेण।

अधमादिविभागेन स्नपनं प्रतिपादितम्।
एकत्रिंशे परिच्छेदे सद्रव्यं साधु सक्रियम्॥

—

## द्वात्रिंशः परिच्छेदः

महाभिषेकादिबहुभेदभिन्नं स्नपनं निरूप्य सम्प्रति एकोत्तर-सहस्रकलशस्नपनं विधातुमारभते अथेति। अस्य प्रयोजनं तु पापापनोदन-क्षमत्वादि पाद्मसंहितायां प्रतिपादितम्[59]। पाथांसीति—जलानीत्यर्थः। भार्गवरामेति—ऋते परशुरामात् शिष्टाः विभवमूर्तयः नव उक्तपूर्वाणां नवसंख्याकानां कुम्भानां अधिदेवता इत्यर्थः। पूर्ववदिति। पूर्ववत् नवममूर्तेः कल्केः शुद्धोदककुम्भाधिदैवत्यमिति भावः।

मूलक्षोदा इति—सहदेव्यादिमूलचूर्णानीत्यर्थः। अत्र चैकोत्तर-सहस्रकलशनिवेशनप्रकारः सम्यक् प्रतिपादितः। प्रधानमण्डलगतानि स्थानानि ब्राह्म—दिव्य—मानुषभेदेन त्रिधा विभक्तानि। प्रधान-मण्डलमध्यभागे ब्राह्मस्थाने एकस्मिन्नुपमण्डले एकोत्तराशीतिघटानां (८१) निवेशः। प्रधानमण्डल द्वितीयभागे दिव्यस्थाने ऐन्द्र—याम्य—वारुण —सौम्येषु चतुर्षु निर्मितेषूपमण्डलेषु प्रत्येकं एकोत्तराशीतिघटानां (८१) निवेशः (८१×४+८१=४०५)। एवमाग्नेयादिकोणेषु चतुर्ष्वपि प्रतिकोणं एकोनपञ्चाशत्कलशानां (४९) निवेशः। (४९×४+४०५—६०१)। प्रधानमण्डलतृतीयभागे मानुषस्थाने षोडशोपमण्डलेषु प्रत्येकं पञ्चविंशतिकलशानां (२५) निवेशः (२५×१६+६०१=१००१)। एवं क्रमेण एकोत्तरसहस्रकलशाः सुरुचिरेण मार्गेण निवेश्यन्ते। तत्तत्स्था-नेषु द्रव्यदेवतामन्त्राणां निर्देशश्च युक्तिसहः। यथाविधि तत्तद्द्रव्यनिक्षेपेण, देवतासमाराधनेन, मन्त्रोच्चारणेन च समुत्पन्नः विलक्षणः शक्तिविशेषः

तदभिषेकद्वारा विम्बे भगवतः सान्निध्यं निरतिशयं विधाय तत्तत्फलदायि बोभवीतीत्यत्र न कश्चिद्विचिकित्सालेश इति शम् ।

एकोत्तरसहस्राणां कलशानां निवेशनम् ।
समन्त्रकं च स्नपनं द्वात्रिंशे तैर्निरूपितम् ।।

---

## त्रयस्त्रिंशः परिच्छेदः

एकोत्तरसहस्रकलशस्नपनविधिं निरूप्य ततः परं सर्वलोककल्याणकरं, सर्वारिष्टप्रशामकं, महोत्सवं व्युत्पादयितुमुपक्रमते अथेति—निर्णेजितमिति—सम्यक् शोधितमन्यर्थः, निर्णेज्यत इति निर्णेजितम्, णिजर्—शौचपोषणयोः । खलियुक्तिमिति-यवाग्वादिपिष्टयुक्तमित्यर्थः । ध्वजपटमिति—ध्वजार्थं निर्मितं गरुडपटमित्यर्थः । अनन्तेति—अनन्तादयोऽष्ट नागाः गरूडस्याभरणीभूताः । अष्टधान्यानीतिपूर्वोक्तानि (*P*. 86) यवव्रीहिनिष्पावप्रियङ्गु तिलमाषनीवारशालिधान्यानीत्यर्थः ।

अन्तस्सार इति—यद्यपि तरवस्त्रिविधाः अन्तस्सार-बहिस्सार, निस्सारभेदेन, तथापि तेष्वाद्ययोरेव ध्वजस्तम्भार्थं परिग्रहः । सम्प्रति लोके अर्णवृक्षेणैव ध्वजस्तम्भा निर्मीयन्ते । कथयन्ति च केचिदर्णदेवदारुवृक्षयोरभेदम् । ध्वजमिति—अस्य पताकेत्यर्थः प्राचीनः पताकाश्रयस्तम्भेऽपि ध्वजमिति व्यवहार आधुनिकः । आश्रयाश्रयिभावादभेदाध्यवसायः । प्रकृते तु पताकेत्यर्थ एव ध्वजपदप्रयोग उपलक्ष्यते । 'ध्वजं चिह्ने पताकाया' मिति विश्वः (३. जान्त) । ध्वजशब्दः नपुंसक एव पताकावाचक इति विश्वकोशः । पुंसि तथेत्यमरसिंहः ।

अत्र ध्वजारोहणमिति ध्वजारोपणमिति द्वौ शब्दौ प्रयुज्येते ।

ध्वजं पताकां स्तम्भमारोहयत्याचार्य इति ध्वजारोहणम् । ध्वजं पताकां, स्तम्भे आरोपयत्याचार्य इति ध्वजारोपणम् । प्रसिद्धिस्तु ध्वजारोहण-मित्येव । तथैव ध्वजावरोहणमित्यपि प्रयोगः ।

पारशव इति—सप्तमातृणामर्चकः वाद्यवादननिपुणः अनुलोमजः पारशवः कथ्यते[60] । त्रिगुणात्मिकायै इति—सत्त्वरजस्तमोरूपिण्यै इत्यर्थः । आवरणेष्विति पञ्चस्वावरणेषु बलिप्रदाने नित्योत्सवार्चा-बल्यर्चा नेया । तद्बहिर्वीथिकासु बलिहरणे सुदर्शनमूर्ति, अन्नमूर्ति वा, केवलं भेरीं वा पुरस्कर्तव्यमिति भावः । यदि देवताह्वानभेरीं श्रृणुयाज्जनः कोप्यवश्यं स ग्रामेऽवतिष्ठन्नवबृथावधि नदीतरणादि वर्जयित्वा भगवन्तं सेवेत । ततः परमेव ग्रामान्तरगमनमनुमन्यते ।

सभेरीताडना प्रोक्ता ध्वजारोहणपद्धतिः ।
त्रयस्त्रिंशे परिच्छेदे वराहेण विलक्षणा ।।

---

## चतुस्त्रिंशः परिच्छेदः

अथ महोत्सवाङ्गभूतं ध्वजारोहणं निरूप्य महोत्सवं निरूपयितुं प्रक्रमते उत्सवेति—

अथ को नामाऽयमुत्सवः ? उत्+सवः, उत्सवः । सवः संसार-दुःखजलधिः, तदुत्तरणसाधनमुत्सव इति श्रीपाद्मसंहितायां प्रतिपादितम्[61] । अयं हि प्रथमतस्त्रिधा भिन्नः नित्यनैमित्तिककाम्यभेदेन । प्रतिदिनं देवालये-ष्वनुष्ठीयमान आराधनाविशेषः नित्योत्सव इति पारमेश्वरेऽभिहितम् यथा—

'वासरे वासरे यस्तु क्रियते स तु नित्यकः' इति । सति निमित्तेऽनुष्ठीयमानः नैमित्तिकः । अवग्रहादीनि निमित्तानि । धर्मार्थकामसिद्धये आचर्यमाणः काम्योत्सवः । एभ्यः विलक्षणः महोत्सवः यो वाऽस्मिन् परिच्छेदे अनवयवेन प्रतिपाद्यते । महोत्सवः ध्वजारोहणपूर्वः, देवताह्वानपूर्वः अङ्कुरार्पणपूर्व इति त्रिधा भिद्यते । आद्यः राजराज्यसुखप्रदः । द्वितीयः स्वर्गभोगफलप्रदः । तृतीयः मोक्षदः । अत एवाङ्कुरार्पणपूर्वकोत्सवः सर्वलोकमोक्षदतया सर्वत्रानुष्ठीयते ।

महोत्सवोऽयं, मासावधिकः पक्षावधिकः, द्वादशाह्निकः, नवाह्निकः, साप्ताह्निकः, पाञ्चाह्निकः, त्रिदिनावधिकः, एकदिनावधिकश्चेत्यष्टधा भवति श्रीपाद्मसंहितानुरोधम्[62] । वपनमिति—क्षुरकर्मेति यावत् । 'वपनं बीजाधानेऽपि मुण्डने' इति विश्ववचनात् (३५-नान्त) । 'वपनेन विना कर्म यदि तन्निष्फलं भवेत्' (बिष्णुति. ७-६) इत्युक्ततया आचार्येण तदवश्यमनुष्ठेयमिति भावः । उत्सकाङ्कुरार्पणमिति—उत्सवकर्माङ्गभूतमङ्कुरार्पणमित्यर्थः । यथोदितमिति—एकत्रिंशपरिच्छेदोक्त (P. 178) प्रकारेणेति यावत् । भागवतैरिति—प्राप्तचक्राब्जमण्डलदीक्षैः पाञ्चरात्रिकैः मूर्तिपैरित्यर्थः । प्राभृतद्रव्यमिति—उपायनद्रव्यमित्यर्थः । प्रकर्षेण ध्रियत इति प्राभृतम् । इतोयातमिति—इदं सर्वमुपायनद्रव्यं अस्मात्प्रदेशात्प्राप्तं, इदं चान्यस्मादिति रीत्या विभज्य भगवते दर्शनीयमिति यावत् । पालिकादीति—पालिका—घटिका—शरावेविन्यर्थः । कौतुकक्रियामिति—प्रतिसरबन्धमिति । मे = मह्यं प्रसन्नो भवेति । उत्सवप्रतिसरमिति—उत्सवकर्माङ्गभूतं प्रतिसरमित्यर्थः । पूर्वोक्तवर्त्मनेति—षड्विंशपरिच्छेदोक्ताध्वना (P. 123) चक्राब्जमण्डलमारचय्येति । तीर्थावसानिकमिति—अवभृथान्तमित्यर्थः ।

यागमण्डपे इति—महोत्समसमये चेदं विशेषतया विहितं यत् यागमण्डपे प्रथमं बलिप्रदानम् । मङ्गलाष्टकमिति—अष्टमङ्गलकानीत्यर्थः । बलिं प्रदक्षिणीकृत्येति—बलिबेरं प्रदक्षिणीकृत्येति । तद्दिनविहितमिति—प्रथमदिवसे हंसवाहनं, द्वितीयदिने सिंहवाहनं, तृतीयेऽह्नि गरुड-

**४०१. दक्ष वृद्धौ शीघ्रार्थे च ।** दक्षते । दक्षः । स्त्रियाम् आसु-रिदादिभ्यां ष्फः[1]—दाक्षायणी तारा । द्रुदक्षिभ्यामिनन् (उ० २।५०) दक्षिणः । श्रुदक्षिस्पृहिभ्य आय्यः (दश० उ० ८।१) दक्षाय्यो गरुडः । तस्यापत्यं दाक्षाय्यो गृध्रः ॥६००॥

**४०२. दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु ।** मौण्ड्यं वपनम् । इज्या यजनम् । उपनयनम् मौर्वीबन्धः । नियमः संयमः । व्रतादेशः संस्कारादेशकथनम् । दीक्षते । दीक्षित्वा । दीक्षा । सूददीपदीक्षश्च[2] (३।२।१५३) इति युच्—नास्ति—दीक्षिता । अन्ये दीक्ष मौण्ड्ये ज्योपनयनादौ[3] चेत्याहुः । ज्यक्षते[4] । जीनः ॥६०१॥

**४०३. ईक्ष दर्शने ।** राधीक्ष्योर्यस्य विप्रश्नः (१।४।३९) इति सम्प्र-दानम्—चैत्रायेक्षते । ईक्षिक्षमिभ्यां च (३।२।१ वा०) इति णः—ग्रामेक्षा स्त्री । प्रेक्षा ॥६०२॥

**४०४. ईष गतिहिंसादर्शनेषु[5] ।** ईषते । अच् (द्र० ३।१।१३४) ईषा कीलिका । हलमनसोरीषःपररूपम्[6]—हलीषा, मनीषा । ईषेः किच्च (उ० १।१४) इषुर्बाणः । ईषेः किद् ह्रस्वश्च (उ० ४।२१) इतीकः—इषीका[7] तृणाग्रम् । ईषतीति ईष उञ्छे (१।४५७) इत्यस्य रूपम् ॥६०३॥

**४०५. भाष व्यक्तायां वाचि ।** भाषते । भ्राजभास (७।४।५) इति वा ह्रस्वः—अबभाषत् अबीभषत् । भाष्यम् । भाषितम् । भाषा ॥६०४॥

**४०६. पर्ष स्नेहने ।** पर्षते । घृषिपृष्णि (तु० उ० ४।५२) इति पार्ष्णिः । पर्षत् । परिषत् तु सीदतेः ॥६०५॥

**४०७. गेषृ अन्विच्छायाम् ।** अन्विच्छा गवेषणा । गेषते । अजिगेषत् ॥६०६॥

---

१. नैतादृशं क्वचिद्वचनमुपलभ्यते । अत्र क्षीरस्वामिनोऽमरटीका (पृष्ठ २७) द्रष्टव्या । २. षूद क्षरणे (१।२२) इत्यत्र 'सूददीपदीक्षां च' इत्येवं सूत्रमुद्धृतम् । ३. 'ज्योपनयनादौ' पाठा० । ४. अत्र 'ज्या' धातोः 'ज्याते' रूपं युक्तम् । मूर्धन्यान्तप्रकरणविरोधाज्ज्याक्षेदश्चिन्त्यः ।
५. '०दानेषु' पाठा० । ६. 'ईषेः पररूपत्वम्' पाठा० । ७. 'ईषिका' पाठा० ।

४०८. येषृ प्रयत्ने । येषते ॥६०७॥

४०९. जेषृ णेषृ एषृ ह्रेषृ[1] गतौ । जेषते । नेषते । नप्तृनेष्टृ (उ० २।९४) इत्यत्र नेष्टा । अन्वेषते । अन्वेषितः । इषेः (६।५७) अन्विष्टः । मा भवानन्वेषिषत । दिवादौ इष गतौ (४।१७) अन्विष्यति । तुदादौ इषु इच्छायाम् (६।५७) अन्विच्छति । क्र्यादौ इष आभीक्ष्ण्ये (९।५४) अन्विष्णाति । चुरादौ[2] अन्वेषयति । अन्वेष्टीति तु भ्रान्तिप्रयोगः[3] ॥ ६०८–६११॥

४१०. ह्रेषृ अव्यक्ते शब्दे । हेषतेऽश्वः । हेषितम् । हेषा । रेषृ इत्यपि चन्द्रः (धा० १।४५५) ॥६१२॥

४११. कासृ शब्दकुत्सायाम् । शब्दस्य कुत्सा रोगित्वात् । कासते । कास्प्रत्ययादाम् (३।१।३५) कासाञ्चक्रे । कासः । विकासः कसतेः (१।५९८) ॥६१३॥

४१२. भासृ दीप्तौ । भासते । भ्राजभास (७।४।३) इति वा ह्रस्वः—अबभासत् अबीभसत् । भञ्जभासमिदो घुरच् (३।२।१६१)—भासुरः । स्थेशभास (३।२।१७५) इति वरच्—भास्वरः । भ्राजभास । (३।२।१७७) इति क्विप्–भाः । भातेस् (२।४३) तु भः, चिन्तिपूजि (३।३।१०५) इति चकारादङ् । गुरोश्च हलः (३।३।१०३) इत्यप्रत्ययः—भासा ॥६१४॥

४१३. रासृ शब्दे । रासते । रासिवल्लिभ्यां च (उ० ३।१२५) इति रासभः । रास्ना । रासकः[4] ॥६१५॥

४१४. णासृ शब्दे । नासते ॥६१६॥

४१५. णस कौटिल्ये । अस्य[5] नसते । नासा । नासिका ।६१७।

४१६. भ्यस भये ।भ्यसते । भेषृ[6] इति चन्द्रः (चा०धा० १।६०७) भेषते[6] ॥६१८॥

---

१. 'प्रेषृ' पाठा० । २. चुरादौ क्षीरतरङ्गिण्यां न पठ्यते ।
३. अदादौ इषधातोरदर्शनादिति भावः । ४. 'रासः' इत्यधिकः क्वचित् ।
५. 'अस्मात्' पाठा० ।
६. 'भेसृ''''''भेसते' पाठा० । चान्द्रधातुपाठे 'भेषृ' एवोपलभ्यते ।

**४१७. आङः शसि इच्छायाम् ।** आशंसते, आशंस्यते ।[1] **आशंसा** । सनाशंसभिक्ष उः (तु० ३।२।१६८)—**आशंसुः** । शन्सु स्तुतौ (१।४८१) इत्यस्य **शंसति, शस्यते । शस्त्रम्** । दुर्ग आङः शासु इत्याह[2]—आशासते आशास्यते । आशासित्वा आशास्त्वा । आशा, आशास्तः[3] । अदादौ आङः शासु इच्छायाम् (२।१३) तङ्—**आशास्ते । आशीः** । तथा शासु अनुशिष्टौ (२।७२) **शास्ति** ॥६१९॥

**४१८. ग्रसु ग्लसु अदने । ग्रसते । ग्रस्त्वा, ग्रसित्वा । ग्रस्तः** । ग्रसेरा च (दश० उ० ७।१८ श्वेत० १।१२९) इति **ग्रामः । ग्रासः । ग्रीष्मः** ॥६२०, ६२१॥

**४१९. ईह चेष्टायाम् । ईहते । ईहाञ्चक्रे । ईहित्वा । ईहितम् । ईहा** ॥६२२॥

**४२०. बहि महि वृद्धौ । बंहते** । लङ्घिबंह्योर्नलोपश्च (उ० १।३०) इति **बहु**[4] । **मंहते** । वर्तमाने पृषद्बृहद् (उ० २।८५) इति **महत्** । **मही तु महेः पूजार्थात् (१०।२५४)** ॥६२३, ६२४॥

**४२१. अहि गतौ**[5] **। अंहते । अंहः पापम्** । आहन्तेर्डो ह्रस्व.[6] **अहिः । अंह्रिः** । **अयश्चुरादौ भासार्थः** (१०।१९७) **अंहयति, बंहयति मंहयति** ॥६२५॥

**४२२. गर्ह गल्ह कुत्सने**[7] । **गर्हते । गर्हा** । गर्ह विनिन्दने (१०।२३३) **चुरादौ वा णिच्—गर्हयति, गर्हति** ॥६२६, ६२७॥

---

१. सायण मते 'आङः शन्सु इच्छायाम् । आशंसते, आशस्यते' इति पाठः (द्र० धा० वृ० पृष्ठ ११६) ।

२. पुरुषकारे तु 'दौर्गा आङः शंसु इत्याहुः' इति क्षीरतरङ्गिण्याः पाठ उद्ध्रियते (परं स चिन्त्यः) । तथा सति 'आशंसते आशस्यते' इत्युदाहरणपाठोऽपि द्रष्टव्यः ।

३. 'आशस्तिः' इत्यधिकम् ।

४. 'बहुः' पाठा० ।

५. 'अहि लिह वक्रगतौ' इति काशकृत्स्नधातुपाठे पठ्यते (पृष्ठ १२२) ।

६. अपपाठोऽयम् । आङ्पूर्वाद्धन्तेर्डप्रत्यये 'अह' इत्येतत् सिद्ध्यति, न तु 'अहिः' । अपि चात्र हन्तेर्न कोऽपि प्रसंगः ।

७. 'कुत्सायाम्' पाठा० ।

४२३. बर्ह बल्ह प्राधान्ये[1] । बर्हते । ण्वुलि (द्र० ३।१।१५०) बर्हकः । प्रबर्हः । बल्हः । बल्हिर्देशः, [तत्र] भवे बाल्हिकः । चुरादौ भासार्थौ (१०।१९७) बर्हयति, बल्हयति ॥६२८,६२९॥

४२४. वर्ह परिभाषणहिंसादानेषु । [वर्हते] ॥६३०॥

४२५. प्लिह गतौ[2] । प्लेहति[3] । श्वन्नुक्षन् (उ० १।१५९) इति प्लीहा ॥६३१॥

४२६. वेहृ जेहृ बाहृ प्रयत्ने । वेहते । संश्चत्तृपद्वेहत् (उ० २।८६) इति वेहद् गर्भघ्नी गौः, विहन्ति इत्येके । बाहते । क्षुब्धस्वान्त (७।२।१९) इति बाहेर्बाढम्, बाहितम् । वह प्रापणे (१।७३१) वहति, वहते । वोढा ॥६३२—६३४

४२७. द्राहृ निक्षेपे[4] । द्राहते । द्राह्यम् । द्राहृ निद्राक्षये इति दुर्गः ॥६३५॥

४२८. काशृ दीप्तौ । काशते । कथं चाकशीति[5] उपधाह्रस्वोऽत्र वक्तव्यः । काशः । प्रकाशः । आकाशः । प्रतीकाशः, नीकाशः, इकः काशे (६।३।१२३) दीर्घः । हनिकुषिनीरमि (उ० २।२) इति काष्ठम् । इन् (दश० उ० १।४६) काशिर्देशः ॥६३६॥

४२९. ऊह तर्के । तर्क उत्प्रेक्षा । ऊहते । उपसर्गादस्यत्यूह्योः (१।३।२९ वा०) इति वा लङ्गतौ—समूहति, समूहते । समूहः । उपसर्गाद्-ध्रस्व ऊहतेः (७।४।२३) समुह्यते । परिसमुह्य । समूह्योऽग्निः[6] ॥६३७॥

---

१. स्मृतं धातुवृत्तौ (पृष्ठ ११७) । २. द्र० पृष्ठ ९०, टि० ५ ।

३. क्वचिन्न । आत्मनेपदिषु पाठात् 'प्लेहते' इति युक्तम् ।

४. स्मृतं धातुवृत्तौ (पृष्ठ ११७) । 'निद्राक्षये' इति काश्चित्कः पाठः, सोऽपपाठः, दुर्गमते तस्यार्थस्यैव प्रतिपादनात् ।

५. अनश्नन्नन्यो अभि चाकशीति' इति ऋग्वेदे (१।१६४।२०) श्रूयते ।

६. समूह्यं सम्पूर्वाद् वहेरिति वृत्तिकाराः (३।१।१३१) । महाभाष्ये तु सम्पूर्वाद् ऊहतेरित्युक्तम् (३।१।१३१) । तत्रैव चोद्धृतं ब्राह्मणम्—'समूह्यं चिन्वीत पशुकामः ''''''पशूनेवास्मै समूहति' (का० सं० २१।४) इति ।

**४३०. गाहृ विलोडने ।** विलोडनं परिमलनम् । गाहतेऽम्भः । गाढा, गाहिता । गाढः ॥६३८॥

**४३१. ग्लहू[1] ग्रहणे ।** ग्लहते । ग्लाढा, ग्लहिता । ग्रहू इति चन्द्रदुर्गौ (चा० धा० १।४७३) ॥६३९॥

**४३२. घसि[2] करणे ।** घंसते । चन्द्रो घषि[3] इत्याह–घंषते । घुषि कान्तिकरण इति दुर्गः[4]—घुंषते ॥६४०॥

**४३३. उदात्ता अनुदात्तेतः ॥**

**[अथ सेटः परस्मैपदिनः]**

**४३४. घुषिर् शब्दार्थः[5] ।** इतोऽर्हपर्यन्ताः (१।४८८) अष्टाशीतिः सेटः परस्मैपदिनश्च । घोषति । अघुषत्, अघोषीत् । घुषिरविशब्दने (७।२।२३) निष्ठायां नेट्–घुष्टा रज्जुः । नेह—संघुषितं वाक्यम् । चुरादौ घुषिर् विशब्दने (१०।१७२) घोषयति[6] । इत्नुच् घोषयित्नुः ॥६४१॥

**४३५. अक्षू व्याप्तौ संघाते च ।** अक्षोऽन्यतरस्याम् (३।१।७५) श्नुः—अक्षति अक्ष्णोति । अष्टा, अक्षिता । अक्षम् । अक्षरम् ॥६४२॥

**४३६. तक्षू त्वक्षू तनूकरणे ।** तनूकरणे तक्षः (३।१।७६) इति श्नुः तक्षति तक्ष्णोति । नेह—संतक्षति वाग्भिः । तष्टा, तक्षिता[7] । तष्टः । तक्षा । तक्षकः । त्वक्षति । त्वष्टा, त्वक्षिता । त्वच त्वचने (१।४४३) अर्थभे-

---

१. इतः पूर्वं 'ग्रहू' इति क्वचिदधिकम् ।

२. सायणः स्वामिमते 'घस' इति पाठमाह (धा० वृ० पृष्ठ ११९) ।

३. हेमचन्द्रोऽपि 'मूर्धन्यान्तोऽयमिति चन्द्रः—घंषते' इति ब्रुवन् 'घषि करणे' इति चान्द्रपाठमाह । सायणस्तु 'घिषीतीदुपधं पेठतुः चन्द्रकाश्यपौ' इति (पृष्ठ ११९) लिखन् 'घिषि करणे' इति चान्द्रपाठं द्योतयति । मुद्रिते चान्द्रधातुपाठे 'घुषिर् करणे' (१।४७३) इति पठ्यते । काशकृत्स्नीयधातुपाठेऽपि 'घुषिर् कान्तिकरणे' (पृष्ठ १२४) इति पठ्यते । कोऽत्र चान्द्रः पाठ इति सुधियो निर्णयन्तु ।

४. उद्धृतमिदं पुरुषकारे (पृष्ठ १११) ।

५. स्मृतमिदं पुरुषकारे (पृष्ठ ११०) धातुवृत्तौ (पृष्ठ ११९) च ।

६. 'गौः' इत्यधिकं क्वचित् ।

७. 'तष्टम्' पाठा० ।

वार्थः ॥६४३, ६४४॥

४३७. उक्ष सेचने । उक्षति । उक्षितः । श्वन्नुक्षन् (उ० १।१५९) इति—उक्षा ॥६४५॥

४३८. रक्ष पालने । चौराद् रक्षति । असुन् (दश० उ० ९।४९) रक्षः ॥६४६॥

४३९. णिक्ष चुम्बने । चुम्बनं वक्त्रसंयोगः । प्रणिक्षति । वा निक्षनिंसनिन्दाम्[1] ( तु० ८।४।३३ ) इति णत्वम्—प्रणिक्षिता, प्रनिक्षिता ॥६४७॥

४४०. तृक्ष स्तृक्ष णक्ष गतौ । [तृक्षति,स्तृक्षति ।] तृक्षस्यापत्यं तार्क्ष्यः (द्र० ४।१।१०५) । स्तृक्षः । षोपदेशो न्याय्यः, तथा च चान्द्राः— तृक्ष ष्टृक्ष[2] णक्ष (तु० चा० धा० १।२१५) इति पेठुः । अमिनक्षि (उ० ३।१०५) इत्यत्रन्—नक्षत्रम् । नभ्राट् (६।३।७५) सूत्रेऽस्य निपातनं नाम्नां व्युत्पत्तिरव्यवस्थितेति ज्ञापनार्थम् ॥६४८—६५०॥

४४१. मक्ष रोषे[3] । मक्षति । घञ् मक्षः । मक्षिका । यूकामक्षिकमत्कुणम्[4] इति छान्दसम् ॥६५१॥

४४२. वक्ष संघाते ।[5] असुन् (दश० उ० ९।४९) वक्षः ॥६५२॥

४४३. त्वक्ष त्वचने[6] । त्वचनं त्वचोग्रहणम् । संवरणमिति दुर्गः[7] । त्वष्टा ॥६५३॥

४४४. सूक्ष्यं अनादरे । [8]सूक्ष्यति । षान्तो[9]ऽयमिति चन्द्रः

---

१. 'वा निंसनिक्षनिन्दाम्' इति काशिकादिषु पाठः । २. चान्द्रे 'स्तृक्ष' पाठः ।

३. 'मुक्ष रोषे—मुक्षति, मुक्षः' इति काशकृत्स्नधातुपाठकन्नडटीकायां पाठः (पृष्ठ ५६) । ४. 'मङ्कुणम्' पाठा० ।

५. 'वक्ष रोषे' इति काश० धातु० पृष्ठ ५५ ।

६. 'तक्ष वचने—तक्षति (वक्ति), तक्षः (वाचकः)' इति काश० धातु० पृष्ठ ५६ । ७. उद्धृतमिदं पुरुषकारे (पृष्ठ ११५) ।

८. सूर्क्ष अनादरे इति काश० धा० पृष्ठ ५६। धातुवृत्तौ (पृष्ठ १२१) सायणेन 'अनादरे' इति पाठो दूषितः। ९. सूर्क्ष इत्यर्थः । उद्धृतं पुरुषकारे (पृष्ठ १११) ।

(चा० धा० १।२१९) सूर्क्षति। असूर्क्षणम् अपरिभवः। यान्तस्यापि यस्य हल (६।४।४९) इति यलोपात्[1] ॥६५४॥

४४५. काक्षि वाक्षि माक्षि द्राक्षि ध्राक्षि ध्वाक्षि काङ्क्षायाम्। काङ्क्षति। द्राक्षा। ध्वाङ्क्षः ॥६५५—६६०॥

४४६. द्राक्षि ध्राक्षि घोरनिवाशिते च। ध्वाक्षि चेति दुर्गः ॥

४४७. पक्ष परिग्रह इत्येके ॥६६१॥

४४८. चूष[2] पाने। चूषति। चूषितः। चूषित्वा ॥६६२॥

४४९. तूष तुष्टौ। तूषति। दिवादौ (४।७६) तुष्यति ॥६६३॥

४५०. पूष वृद्धौ। पूषति। पुष पुष्टौ (१।४६२) पोषति। दिवादौ (४।७४) पुष्यति। क्रयादौ (९।५७) पुष्णाति। चुरादौ (१०।१९५) पोषयति। श्वन्नुक्षन् (उ० १।१५९) इति पूषा ॥६६४॥

४५१. मूष स्तेये। मूषति। मूषा तैजसावर्तनी[3]। गौरादौ (गण० ४।१।४१) मूषी। ण्वुलि मूषकः। क्रयादौ मुष हिंसार्थः (१।४५८)—मोषति। क्रयादौ (९।५८) मुष स्तेये—मुष्णाति। मुषेर्दीर्घश्च (उ० २।४३) इतीकः—मूषिकः। लूषोऽपीति दुर्गः ॥६६५॥

४५२. सूष प्रसवे। सूषति। सुसूष। तालव्यादिरिति चरकः[4]—शूषा शाकम् ॥६६६॥

४५३. यूष हिंसायाम्। ४५४. जूष च। यूषः। यूषम्। जूषितः। जूषा ॥६६७, ६६८॥

---

१. असूर्क्षणम् इत्येव रूपं निष्पद्यत इत्यर्थः।

२. इत आरभ्य 'पूष' पर्यन्ताः काशकृत्स्नीये धातुपाठे ह्रस्वोपधाः पठ्यन्ते। तेषां च 'चुषादेर्दीर्घः' इति सूत्रेण सार्वधातुके दीर्घत्वं विधीयते। असार्वधातुके च लघूपधगुण उदाह्रियते—चोषकः, तोषः, तोषकः, मोषः, मोषणम्, सोषकः। दीर्घोपधत्वे तु गुणो दुर्लभः। ३. तु० 'तैजसावर्तनी मूषा'। अमर० २।१०।३३॥

४. 'तालव्योष्मादिरिति पारायणिका इति स्वामी' इति धातुवृत्तौ (उ० १२१) उद्ध्रियते। अयं पाठः क्षीरतरङ्गिण्यां नोपलभ्यते।

४५५. भूष अलङ्कारे । भूषति । भूषा । चुरादौ ( १०।१०५ ) भूषयति । तसि भूष इति दुर्गः । तंसति । उत्तंसः । अवतंसः ॥६६९॥

४५६. ऊष रुजायाम् । ऊषति । ऊषः क्षारमृत्तिका । ऊष्मा, ऊषणम् मरिचम् । त्र्यूषणं त्रिकटुकम्[1] ॥६७०॥

४५७ ईष उञ्छे । ईषति । ईषा प्रणगवेषणी । इषुः । इषीका ॥

४५८. कष शिष जष झष शष वष मष मुष रुष रिष हिंसार्थाः । कषति । निकषोऽश्मा । पत्काषी । सर्वकूलाभ्र (३।२।४२) इति खच्—कूलङ्कषः । कृच्छ्रगहनयोः कषः (७।२।२२) इति क्तेऽनिट्—कष्टोऽग्निः । निमूलसमूलयोः कषः (३।४।३४) इति णमुल् कषादिषु तैरेवानुप्रयोगः (द्र० ३।४।४६) इति समूलकाषं कषति । वौ कषलस (३।२।१४३) इति घिनुण्—विकाषी । कषिः, कषी खनित्रम् । कषेश्छ च (उ० उ० १।८४) इति कच्छूः पामा । वृतृवदि (उ० ३।६२) इति सः—कक्षस्तृणं बाहुरुमूलञ्च । गृहोपान्ते तु कक्षा कक्ष्या च । कषिदूसिभ्यामीकन् (उ० उ० ४।१६) कषीका । शेषति । रुधादौ शिष्लृ विशेषणे (७।१३) विशिनष्टि । चुरादौ शिष असर्वोपयोगे (१०।२११) शेषयति, शेषः । झषति । झषः । शषति । शष्यते । शष्पः । मषी । मष्यते-माषः । मोषति । क्र्यादौ (९।५८) मुष्णाति । रोषति । दिवादौ (४।१२४) रुष्यति । रुष्यन्ती । रेषति । दिवादौ[2] रिष्यति । तीषसहलुभ (७।२।४८) वेट्—रोष्टा रोषिता । रुष्यमत्वर (७।२।२८) इति वेट्—रुष्टः रुषित, रेष्टा रेषिता । रिष्टः, अरिष्टः[3] । खषेत्यपीति कण्ठः—खषति खषः ॥६७२—६८१॥

४५९. भष भर्त्सने । शब्दकर्मकः, कुत्सितशब्दकरणार्थे । श्वा भषति, बुक्कति । भषति भषिका, पैशुन्येन वक्तीत्यर्थः । भषकः । भषट् (द्र० गण० ३।१।१३४=भषी) ॥६८२॥

४६० उष दाहे । ओषति उषविदजागृरन्यतरस्याम्[4] (द्र० ३।१।३८) इति लिट्याम् वा—ओषाञ्चकार, उवोष । उणादावुल्का, उल्मुकम्,

---

१. पिप्पली, शुण्ठी, कृष्णमरीचिका च 'त्रिकटुकम्' इत्युच्यन्ते ।

२. क्षीरतरङ्गिण्यां दिवादौ न पठ्यते । ३. 'रिष्टम्', अरिष्टम्' पाठा० ।

४. 'उषविदजागृभ्योऽन्यतरस्याम्' इति काशिकादिषु पाठः ।

उलपः सूक्ष्मलताभिधानम्, उल्बं जरायुः । उषिकुषिगर्तिभ्यस्थन् (उ० २।४)—ओष्ठः । इणूषिञ्जिदीङुष्यविभ्यो नक् (उ० ३।२)—उष्णः । उषिखनिभ्यां कित् (उ० ४।१६२)—उष्ट्रः[1] उष्ट्री । उषः कित् (उ० ४।२३४) उषाः। असुन् (दश० उ० ९।४९) उषः प्रभातम् ॥६८३॥

४६१. जिषु[2] विषु मिषु सेचने । परिवेषति । ह्वादौ विष्लृ व्याप्तौ (३।१४)—वेवेष्टि । मेषति । पचादौ (गण० ३।१।१३४) मेषः । तुदादौ मिष स्पर्धायाम् (६।५८) मिषति । मिश मश शब्दे (१।४७६) तालव्यान्तौ ॥६८४-६८६॥

४६२. पुष पुष्टौ । पोषति । पोषिता। अपोषीत्। पुषः कित् (उ० ४।४) पुष्करम् । कलश्च[3] (तु० उ० ४।५) पुष्कलम् । स्तनिहृषिपुषि(उ० ३।२९) इति पोषयित्नुः । स्वे पुषः (३।४।४०) इति णमुल्—स्वपोषं पुष्टः । दिवादौ[4] (४।७४) पुष्यति । पुषादिद्युतादि (३।१।५५) इति लुङ्यङ्—अपुषत् । क्र्यादौ (९।५७) पुष्णाति । चुरादौ पुष धारणे (१०।१६५) पोषयति ॥६८७॥

४६३ श्रिषु श्लिषु प्रुषु प्लुषु दाहे । श्रेषति । श्लेषति । अश्रेषीत् । अश्लेषीत्[5] । श्रिष्ट्वा, श्लिष्ट्वा, श्रेषित्वा, श्लेषित्वा । श्लिष आलिङ्गने दिवादौ (४।७८) श्लिष्यति । श्लेष्मा । चुरादौ श्लिष श्लेषणे (१०।३४)—श्लेषयति । प्रोषति । दिवादौ (४।७) प्लुष्यति । प्लुष्ट्वा, प्रोषित्वा । प्लुष्टः । क्र्यादौ प्रुष प्लुष स्नेहसेचनपूरणेषु (९।५६) प्रुष्णाति प्लुष्णाति ॥

---

१. 'ष्ट्रन् बाहुलकादगुणत्वम्' इति धातुवृत्तिकारः (पृष्ठ १२३) । तच्चिन्त्यम्, उणादिसूत्रेणैव सर्वेष्टसिद्धेः ।

२. काशकृत्स्नीयधातुपाठे जेषतेरनन्तरं 'णिषु' पठ्यते, नेषति (पृष्ठ ५७) एतद्विषये 'नेषतिः धात्वन्तरम्' इति पतञ्जलिवचनम् (३।२।१३५) अनुसन्धेयम् ।

३. 'कलच्च' इति श्वेतवनवासिनः (पाठः ४।५) । अथर्वणि (१३।३।१०) पुष्कलशब्दस्यान्तोदात्तत्वदर्शनात् श्वेतवनवासिपाठ एव ज्यायान् ।

४. स्मृतमिदं पुरुषकारे (पृष्ठ १११) ।

५. 'वर्धमानस्वामिसम्मताकारादयश्चाप्ढं सेट्माहुः (धा० वृ० पृष्ठ १२५) । अनिट्कारिकासु दैवादिकस्यैवग्रहणमिति कैयटादयः ( सि० कौ० भाग ३ पृष्ठ

**४६४. पृषु वृषु मृषु सेचने ।** **पर्षति ।** वर्तमाने पृषद्बृहद् (उ० २।८४) इति **पृषत् ।** पृषिरञ्जिभ्यां कित् (उ० ३।१११) **पृषतो मृगो बिन्दुश्च । उणादौ-पृष्ठम्** (द्र० २।१२), **पार्ष्णिः** (द्र० ४।५२), **पर्जन्यः** (द्र० ३।१०३), **पृष्णिः किरणः**[1] । **स्पृशेस्** ( ६।१२३ ) **तु पृश्निरल्पतनुः । वर्षति ।** विभाषा कृवृषोः (३।१।१२०) **क्यप्—वृष्यम्, वर्ष्यम् । के** (द्र० ३।१।१३५) **वृषः ।** लष-पत-पद-स्था-भू-वृष (३।२।१५४) **इति वर्षुकः ।** अजूविधौ भयादीनामुपसंख्यानम् (३।३।५६ वा०) **इति वर्षम् । अचि** (द्र० ३।१।१३४) **वर्षा ऋतुः । वृष्ट्वा वर्षित्वा । वृष्टम् ।** कर्तरि चेष्यते[2] **इति वृष्टो देवः ।** कनिन् युवृषि (उ० १।१५६) **इति वृषा इन्द्रः ।** ऋषिवृषिभ्यां किच्च (तु० उ० ३।१२३) **इत्यभच्-वृषभः ।** वृषादिभ्यश्चित् (उ० १।१०८) **इति वृषलः ।** सुवृषिभ्यां कित् (उ० ४।४९) **वृष्णिः ।** नहिवृति (६।३।११६) **इति दीर्घत्व—प्रावृट् ॥६९२-६९४॥**

**४६५. मृषु सहने च । मर्षति । मृष्ट्वा, मर्षित्वा ।** मृषस्तितिक्षायाम् ( १।२।२० ) इत्यस्याकित्त्वं[3] नास्ति, तत्र न क्त्वा सेट् (१।२।१८) **इत्यनुवृत्तेः—मृष्टम् । दिवादौ** (४।५५) **मृष्यति । अपमृषितं वाक्यमाह ।** भाषायां शासियुधि (३।३।१३० वा०) **इति युच्—दुर्मर्षणः ॥**

**४६६. भृषु हिंसासंघातयोः । भर्षति ॥६९५॥**

**४६७. घृषु संघर्षे । घर्षति । घृष्ट्वा, घर्षित्वा । घृष्टः । ल्युः** (द्र० ३।१।१३४)**—संघर्षणः ॥६९६॥**

**४६८. हृषु अलीके**[4] **। हर्षति । हृष्ट्वा, हर्षित्वा । हृष्टः—** हृषेर्लोमसु ( ७।२।२९ ) **इति हृषितानि लोमानि ।** विस्मितप्रतिघातयोश्च (७।२।२९ वा०) **हृष्टश्चैत्रः, हृषितः ।** हृषेरुलच् (उ० १।९८) **हृषुलः ।** स्तनिहृषि- (उ० ३।२९) **इति प्रहर्षयित्नुः । दिवादौ** हृष तुष्टौ (४।१२२) **हृष्यति ॥**

---

१९६) व्याख्यातं च स्वयमेव दीक्षितेन—'आदिशब्दात्-न्यासकारहरदत्तवर्धमानस्वामिसम्मताकारादयः (प्रौ० मनो० पृष्ठ ५८१) ।

१. द्र०—पर्षतेरपीच्छन्त्येके—पृष्णी रश्मिः । हैमोणादि ३३५ ।

२. कुत्रत्यं वचनमिति न ज्ञायते । ३. जर्मनसंस्करणे 'कित्त्वं' इत्यपपाठः ।

४. अलीकमानन्द इति काशकृत्स्नधातुपाठीयकन्नडटीका (पृष्ठ ६१) ।

**४६९. तुस हस ह्लस रस शब्दार्थाः।** तोसति। तोसलो राजाः, तोसला देशः। ह्लसति। ह्लसितः। ह्रस्वः। ह्लसति। रसति। रसितम्। चुरादौ रस आस्वादने (१०।३१५) अदन्तः—रसयति, रसना, रस्यते—रसः। उणादौ (३।१५) रास्ना। रसालास्त्यर्थे(द्र०५।२।१२५)॥६९९–७०१॥

**४७०. लस श्लेषणक्रीडनयोः।** लसति। अलसः। विलासः। ह्लासः। लास्यम्। लसिका रोगः॥७०२॥

**४७१. घस्लृ अदने** इति केचित्[1]। घञ्—घासः। कमरचि(द्र० ३।२।१६०) घस्मरः॥७०३॥

**४७२. चर्च झर्छ झर्झ परिभाषणे।** जंस इति चन्द्रदुर्गौ (चा० धा० १।२४१)। चर्चे इत्येके। अर्जे इत्यन्ये, भर्चं इत्यपरे। किमत्र सत्यम्? देवा जानन्ति। तुदादौ (६।२०) अप्येवम्॥७०४–७०६॥

**४७३. पिसृ पेसृ गतौ।** पेसति। स्थेशभासपिस (३।२।१७५) इति वरच्—पेस्वरः। चुरादौ पिस गतौ (१०।२९) पेसयति। पिशृ पेसृ वेसृ इति सभ्याः। वेसरोऽश्वतरः॥७०७,७०८॥

**४७४. हसे हसने।** हसति। व्यतिहारे हसादीनां प्रतिषेधः (द्र० १।३।१५ वा०)—व्यतिहसन्ति। ह्म्यन्तक्षण (७।२।५) इत्येदित्वाद् वृद्धिर्नास्ति—अहसीत्। स्वनहसोर्वा (३।३।६२) अप्—हसः, हासः। स्फायि (उ० २।१३) इति रक्—हस्रो[2] दिनम्। हसिमृग्रिण (उ० ३।८६) इति तन्—हस्तः॥७०९॥

**४७५. णिश समाधौ।** प्रणेशति। निशा[3]॥७१०॥

**४७६. मिश मश शब्दे रोषकृते च।** शब्दने रोषक्रियायाश्चार्थे। के (द्र० ३।१।१३५) मिशो व्याजः। क्वुन्—मशकः॥७११, ७१२॥

**४७७. शव गतौ।** शवतिर्गतिकर्मा कम्बोजेषु भाष्यते, विकार एनमार्या ॥

---

१. अयं न सार्वत्रिक इति सायणोऽपि (धा० वृ० पृष्ठ १२५)।

२. अमरादिकोशेषु दिनवाची 'घस' शब्दः पठ्यते।

३. अत्र धातुवृत्तिः (पृष्ठ १२६) द्रष्टव्या।

आहुः[१] । शवति । शवरः, शवः, शावम् ॥७१३॥

४७८. शश प्लुतिगतौ । प्लुतिभिर्गमने । शशति । शशः । शशकः ॥७१४॥

४७९. कश शब्दे । कशेति कौशिकः । काशस्तृणम् । काशिः । कश्मीराः ॥७१५॥

४८०. शसु हिंसार्थः[२] । शसति । न शसददवादि (६।४।१२६) इत्येत्वाभ्यासलोपौ न स्तः—शशसतुः शशसुः । ह्म्यन्तक्षणशस[३] (तु० ७।२।५) इत्यशसीत्[३] । शस्त्वा, शसित्वा । धृषशसी वैयात्ये[४] । (तु०७।२।१६) अनिट्—विशस्तः, अन्यत्र विशसितः । दाम्नीशसु[५] (तु० ३।२।१८२) इति ष्ट्रन्—शस्त्रम् । विशसिता । उणादौ शस्ता ॥७१६॥

४८१. शंसु स्तुतौ । शंसति । शस्यते । शंस्त्वा, शंसित्वा । शंसिदुहिगुहिभ्यो वा (३।१।१०९ वा०) इति वक्तव्यात् क्यप्—शस्यम् । शंस्येण्यदु अपीष्यते—शंस्यम् । नृशंसः । उणादौ शंस्ता पशुविशसिता । अत एव शंसु स्तुतौ च[६] इति दुर्गः ॥७१७॥

४८२. चह कल्कने । कल्कनम् शाठ्यम् । चहति । चुरादौ मित् (१०।७९) चहयति ॥७१८॥

४८३. रह त्यागे । रहति । अरहीत् । विरहः । राहुः । असुन् (दश० उ० ९।४९) रहः । चुरादौ (१०।२४५) रहयति ॥७१९॥

४८४. रहि गतौ । रंहति । रंहः ॥७२०॥

४८५. दृह दृहि बृह बृहि वृद्धौ[७] । दर्हति । दृढः स्थूलबलयोः (७।२।२०) साधुः । दृंहति । बर्हति । वर्तमाने पृषद्बृहद् (उ० २।८४) इति

---

१. ब्रष्टव्यम्—निरुक्त २।२॥ महाभाष्य १।१।१॥ २. 'हिंसायाम्' पाठा० ।

३. 'ह्म्यन्तक्षणश्वस' इति काशिकादिषु पाठः । श्वस-पाठे शसेर्लुङि 'अशासीत्' इति भविष्यति । ४. धृषिशसी वैयात्ये' इति काशिकादिषु पाठः ।

५. 'दाम्नीशस' इति काशिकादिषु पाठः । ६. चात् हिंसायाम् ।

७. अत्राह सायणः (धा० वृ० पृष्ठ १२८)—'क्षीरस्वामी वृह वृहि भासार्थौ' इत्याह' । न चायं पाठः क्षीरतरङ्गिण्यामुपलभ्यते ।

बृहत् । प्रमौ परिवृढः (७।२।२१) साधुः । बृंहेर्नलोपश्च (उ० २।११० ) इतीसिः—बर्हिः । बृंहेर्नोऽच्च (उ० ४।१४५) इति ब्रह्म वृन्दम् ॥७७१-७२४॥

४८६. बृहि शब्दे च । बृंहति । बृंहितम् । बृहिर् इति दुर्गः[1]—अबृहत्, अबर्हीत् । बृंहेर्नलोपाद् बृहोऽद्यतनः ॥

४८७. तुहिर् उहिर् अर्दने । तोहति । अतुहत्, अतोहीत् । वेपितुह्योर्ह्रस्वश्च (उ० २।५२) इति तुहिनम् । ओहति । अपोहति । औहत्, औहीत् । तुहिर् दुहिर् इति चन्द्रदुर्गौ[2] (चा० धा० १।२५७) ॥७२५, ७२६॥

४८८. अर्ह पूजायाम् । अर्हति । अर्हः (३।२।१२) इति कर्मण्यच्च अणो बाधः—पूजार्हा । अर्हः पूजायाम्[3] (तु० ३।२।१३१) शता अर्हन् । न्यङ्क्वादित्वात् (द्र० ७।३।५३) अर्घः । हलश्च (३।३।१२१) इति करणे घञ् । अर्घिर्धात्वन्तरम्—कलां नार्घन्ति षोडशीम्[4] । अर्घो मूल्यम् । शकधृष (३।४।६५) इति तुमुन्—अर्हति भोक्तुम् । अर्ह पूजने चुरादौ (१०।१७७) णिच्—अर्हयति, योग्यत्वादौ नास्ति (?) ॥७२७॥

४८९. उदात्ता उदात्तेतः ॥

---

## [सेट आत्मनेपदिनः]

४९० द्युत दीप्तौ । इतस्स्वरान्ताः (१।५२१) सप्तत्रिंशत् सेट आत्मनेपदिनश्च । द्योतते । द्युद्भ्यो लुङि (१।३।९१) इति वा परस्मैपदम्, तत्र पुषादिद्युतादि (३।१।५५) इत्यङ्—अद्युतत् । तङि व्यद्योतिष्ट । द्युतिस्वाप्योः सम्प्रसारणम् (७।४।६७) लिटि—विदिद्युते । वचनाद् हलादिशेष

---

१. स्मृतमिदं पुरुषकारे (पृष्ठ १२४) ।

२. उद्धृतमिदं पुरुषकारे (पृष्ठ १२०) ।

३. 'अर्हः प्रशंसायाम्' इति काशिकादिषु पाठः ।

४. इंजर्टन-सम्पादिते महाभारतस्य पूना-संस्करणे सभापर्वणि ३८ । श्लोके शारदालिप्यां लिखिते काश्मीरकोशे 'कलां नार्घन्ति षोडशीम्' इत्येव पठ्यते D४ संज्ञके कोशे वर्तमानः 'नार्घति' पाठोऽपि तमेवानुमोदते (द्र० सभापर्व पृष्ठ १ पाठान्तर निर्देशः) । क्षीरतरङ्गिण्याः 'नार्घन्ति' पाठाज्ज्ञायते महाभारतस्य काश्मीर पाठः क्षीरस्वामिनः प्राचीनः । हैमधातुपारायणम् (१।५६४) अप्यत्रानुसंधेयम् ।

भावः[1] चङि—व्यदिद्युतत् । द्योतनः । क्विप्—विद्युत् । द्युतेरिसिरादेश्च जः[2] (तु०उ० २।१११) ज्योतिः[3] । घटादेः (१।५१०)प्राग् द्युतादिगणः॥७२८॥

४९१. श्विता वर्णे । श्वेतते । अश्वितत् । अश्वेतिष्ट । आदितश्च (७।२।१६) इत्यनिट्—श्वित्तः । विभाषा भावादिकर्मणोः (७।२।१७)—श्वित्तमनेन, श्वितितमनेन[4]; प्रश्वित्तः, प्रश्वितितः[5] । क्त्रः—श्वित्रम्[6] ।

४९२. ञिमिदा स्नेहने । स्नेहनं स्नेहयोगः । मेदते । मिन्नः, मिन्नमनेन; मेदितम् । निष्ठा शीङ्स्विदिमिदि (१।२।१९) इति कित्त्वं नास्ति—प्रमिन्नः प्रमेदितः । भञ्जभासमिदो घुरच् (३।२।१६१)—मेदुरः । अमिचिमिदिशसिभ्यः क्त्रः (उ० ४।१६३)—मित्रम् । असुन् (दश० उ० ९।४६) मेदो वसा । अचि—मेदाख्यो म्लेच्छः । मेदिनी । दिवादौ (४।१३४) मेद्यति । चुरादौ मिद स्नेहने (तु० १०१८) मेदयति ॥७३०॥

४९३. ञिक्ष्विदा[7] स्नेहनमोहनयोः । क्ष्वेदते । क्ष्विण्णः । ञिक्ष्विडा[8] इत्याहतः । क्ष्वेडो विषम्, क्ष्वेडाः रवः । ञिष्विदा इति नन्दी—स्वेदते, अस्विदत्, अस्वेदिष्ट । स्विन्नः । सः स्विदिस्वदिसहीनाञ्च (८।३।६२) इति सः—सिस्वेदयिषति । ष्विदा गात्रप्रक्षरणे (४।८०) अस्मात् स्विद्यति ॥७३१॥

४९४. रुच दीप्तावभिप्रीतौ च । अभिप्रीतिरभिलाषः । रुच्यर्थानां प्रीयमाणः (१।४।३३) सम्प्रदानम्—चैत्राय रोचते रोचनः । अरुचत, अरोचिष्ट । न पादमि (१।३।८९) इति तङ्—परिरोचयते । राजसूयसूर्य (३।१।११४) इति कर्तरि रुच्यः साधुः । भावे ण्यत्—रोच्यम्, यजयाचरुच (७।३।६६) इति कुत्वं नास्ति । घञ्—रोकः । ल्युट्—रोचनी

१. अयं भावः—'द्युत् द्युत्' इति द्विर्वचने न तावत् 'हलादि शेषः' प्रवर्तते, संप्रसारणं पूर्वं प्रतीक्षते, अन्यथा हलादिलोपेन यस्य निवृत्तौ कस्य संप्रसारणं स्यात् ।

२. धातुसूत्र १।२७ व्याख्याने 'द्युतेरिसिजादेश्च जः' इति पठ्यते ।

३. अत्र १९ पृष्ठस्था ४ टिप्पणी द्रष्टव्या । ४. 'श्वेतितम्' पाठा० ।

५. 'प्रश्वेतितः' पाठा० । ६. इतोऽग्रे 'अर्शः' इत्यधिकम् ।

७. स्मृतमिदं पुरुषकारे (पृष्ठ ८२) धातुवृत्तौ (पृष्ठ १३०) च ।

८. तथा च प्रयुज्यते—'न क्ष्वेडेत्' । मनु० ४।६४॥

इषत् । ण्यन्ताल्ल्युः (द्र० ३।१।१३४) रोचना । अलंकृञ्निराकृञ् (३।२।१३६) इतीष्णुच्—रोचिष्णुः । युजिरुचितिजां कुश्च (उ० १।१४६) इति रुक्यम् । इसिः—रोचिः । इक् कृष्यादिभ्यः (३।३।१०८ वा०)[1] रुचिः । अस्त्यर्थे रुचिरम् ॥७३२॥

४९५. घुट परिवर्तने । घोटते । अघुटत्, अघोटिष्ट । घोटकः घुटिका गुल्फास्थि ॥७३३॥

४९६. रुट दीप्तौ । रोटते ॥७३४॥

४९७. रुठ लुठ प्रतीघाते[2] । [रोठते,] लोठते । अलुठत्, अलोठिष्ट । लुठतीति लक्ष्यदर्शनात् तुदादौ पाठ्यः । रुट लुट इत्येके, बाधृ रोटने (१।६) इति लिङ्गात्[3] ॥७३५,७३६॥

४९८. शुभ दीप्तौ । शोभते । अशुभत्, अशोभिष्ट । शोभना । के—शुभम् । ज्ञापकात्[4] शोभा । रक्—शुभ्रम् । उणादौ शुकः, शुक्रः, शुक्लः । तुदादौ शुभ शुम्भ शोभार्थे (६।२३) शुभति ॥७३७॥

४९९. क्षुभ संञ्चलने । सञ्चलनं रूपान्यथात्वम् । क्षोभते । अक्षुभत्, अक्षोभिष्ट । क्षुब्धस्वान्त (७।२।१८) इति क्षुब्धो मन्थे साधुः[5] । क्षुभितोऽन्यः । दिवादौ (४।१३१) क्षुभ्यति । क्र्यादौ (९।४९) क्षुभ्नाति ॥७३८॥

५००. णभ तुभ हिंसायाम् । नभते । तोभते । क्र्यादौ (९।५०) नभ्नाति, तुभ्नाति । असुन् (दश० उ० ६।४९) नभः ॥७३९॥

५०१. स्रन्सु ध्वन्सु भ्रन्शु अवस्रंसने । स्रंसते । नीग्वञ्चुस्रन्सु

---

१. जर्मनसंस्करणसम्पादकेन लीबिशेन भ्रान्त्यात्र उणादिसूत्रसंख्या (४।११९) प्रत्ता, उणादौ त्वेतादृक् सूत्रं नास्ति । २. 'प्रतिघाते' पाठा० ।

३. उद्धृतमिदं पुरुषकारे (पृष्ठ ६४) धातुवृत्तौ (१३०) च । एतेनार्थनिर्देशोऽपि पाणिनीय इति ज्ञाप्यते ।

४. शुभ शुम्भ शोभार्थे इति तुदादौ (सूत्र २३) शोभेति पाठात् । अत्र 'निपातनाद्' इति युक्ततरः पाठः स्यात् । वक्ष्यति च स्वयमेव तुदादौ 'अत्र एव निपातनात् शोभा साधुः । ५. 'मन्थश्चेत्' पाठा० ।

७।४।८४) इति सनीस्रस्यते। वसुस्रंसुध्वंस्वनडुहो[1] दः (अ० ८।२।७२) …स्रत्। स्रस्त्वा स्रंसित्वा। वितन् श्राबादिभ्यः (३।३।९४ वा०) …स्तः। ध्वंसते। दनीध्वस्यते। पर्णध्वत्। ध्वस्तिः। ध्वस्त्वा, …सित्वा। ध्वस्तः। भ्रंशते। भ्रष्टिः। बनीभ्रश्यते[2]। भ्रष्ट्वा भ्रंशित्वा। …ः। दिवादौ (४।११९) भ्रश्यति ॥७४०-७४२॥

५०२. ध्वन्सु गतौ च।

५०३. स्रम्भु विश्वासे। विस्रम्भते[3]। व्यस्रम्भत, व्यस्रम्भिष्ट …: इति कौशिकः—स्रंहते, ऊष्मान्तप्रस्तावात् ॥७४३॥

५०४. वृतु वर्तने। वर्तनं स्थितिः। वर्तते वर्तनः[4]। अवृतत् …तिष्ट। वृद्भ्यः स्यसनोः (१।३।९२) वा परस्मैपदम्। न वृद्भ्यश्चतुर्भ्यः (…२।५९) इति तत्रैव नेट्—वर्त्स्यति। वर्तिष्यते। अवर्त्स्यत्, अवर्ति-…। विवृत्सति, विवर्तिषते। वृत्त्वा, वर्तित्वा। वृत्तः, वृत्तिः, वृत्यः। …तरस्त्यस्याम्—वार्त्तः[5]। वृतेश्च (उ० २।१७) इत्यनिः—वर्तनिः। मनिन् (…० उ० ६।७३)—वर्त्म। वोरध्ययने वृत्तम् (७।२।२६)। हस्ते वर्तिग्रहोः (…४।३९) णमुल्—हस्तवर्तं वर्तयति। रक् (द्र० उ० २।१६) वृत्रः। …तिकः। वर्तकः। वर्तका शकुनौ प्राचाम् (७।३।४५ वा०) उदीचां वर्ति-…। इपिशि (दश० उ० १।४७) इतीन्—वर्तिः। दिवादौ वृतु वरणे (४।५०) …के—वृत्यते। चुरादौ (१०।१९७) भासार्थः—वर्तयति ॥७४४॥

५०५. वृधु वृद्धौ। वर्धते। ण्यन्ताल्ल्युः (द्र० ३।१।१३४) …वर्धनः। वृद्ध्वा, वर्धित्वा। वृद्धः, वृद्धिः। इष्णुच्—वर्धिष्णुः। वधिभ्यां रन् (उ० २।२७)—वर्ध्रः। चुरादौ वृधु भासार्थः (१०।१९७) …यति। तत्रैव वर्ध छेदनपूरणयोः (१०।१०४) ॥७४५॥

---

१. '०ध्वन्स्वनडुहां दः' इति काशिकादिषु पाठः।

२. एतेन 'नीग्वञ्चुस्रंसुध्वंसुभ्रंसु०' इत्यादिसूत्रे 'भ्रंशु' इति पाठः स्वामिमते ज्ञाप्यते। अन्ये त्वत्र धातुसूत्रे (५०१) अष्टकसूत्रे च 'भ्रंसु' इत्येव पठन्ति। धातुवृत्तिरपि द्रष्टव्या (पृष्ठ १३१)।

३. विपूर्व एव विश्वासे इति ज्ञापनार्थो विपूर्वस्य प्रयोगः।

४. 'वर्तनम्' पाठा०। ५. अत्र 'वृत्तेश्च' (५।२।१०१) वार्तिकेन णः प्रत्ययः।

५०६. शृधु शब्दकुत्सायाम् । शब्दकुत्सा पायुशब्दत्वात्[1]। शर्धते । अशृधत् अशर्धिष्ट ॥७४६॥

५०७. स्यन्दू स्रवणे[2] । स्यन्दते । अस्यदत्, अस्यन्दिष्ट । स्यन्त्स्यति, स्यन्दिष्यते । स्यन्तुम्, स्यन्दितुम् । अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु (८।३।७२) इति वा षत्वम्—अनुष्यन्दते तैलम् ,अनुस्यन्दते । स्यदो जवे (६।४।२८) साधुः । क्त्वि[3] स्कन्दस्यन्दोः (६।४।३१) नेट्—स्यन्त्वा । युच्—स्यन्दनः । स्यन्देः प्रसारणं धश्च (दश० उ० १।९६) इति सिन्धुः ॥७४७॥

५०८. कृपू सामर्थ्ये । कृपो रो लः[4] ( तु० ८।२।१८ ) कल्पते । अक्लृपत् अकल्पिष्ट । कल्प्स्यति कल्पिष्यते । चिक्लृप्सति चिकल्पिषते । लुटि च क्लृपः (१।३।९३) इति वा परस्मैपदम् । तासि च क्लृपः (७।२।६०) इति नेट्—कल्प्तासि कल्पितासे । कल्प्तुम् कल्पितुम् । क्लृप्तम् । ऋदुपधाच्चाक्लृपिचृतेः ( ३।१।११० ) इति निषेधाण्ण्यत्—कल्प्यम् । कॄतॄकृपिभ्यः कीटन् (उ० ४।१८५) कृपीटं वारि । चुरादौ कृपेस्तादर्थ्ये (१०।१८६) आगर्वीयः—कल्पयते ॥७४८॥

५०९. वृत् । वर्तनं वृत् । द्युतादिर्वृतोदिश्चान्तर्गणौ वर्तितौ समाप्तावित्यर्थः । वृधेः क्विप्, वर्धितौ पूर्णावित्येके ॥

५१०. घट चेष्टायाम् । चेष्टा ईहा । घटते । घटितम् । घटादयो मितः (१।५५३) इति मित्त्वान्मितां ह्रस्वः (६।४।९२) घटयति । घटनः । इह येऽन्यत्र पठितास्तेषां योऽर्थ उपात्तस्तत्रैव मित्त्वम्, येऽत्रैव पठ्यन्ते तेषां सामान्येन, अनेकार्थत्वात् । अतो विघटयतीति चेष्टाभावेऽपि ह्रस्वः । कथम्—कमलवनोद्घाटनं कुर्वते ये (सूर्यशतक २), प्रविघातयिता समुत्पतन् हरिदश्वः कमलाकरानिव (किरात २।४६) चुरादौ घट स्फुट घट च हन्त्यर्थाश्च[5]

---

१. 'पायुशब्दः' पाठा० । २. 'प्रस्रवणे' पाठा० ।

३. 'क्त्वायां चेट् प्रतिषेधः' इति महाभाष्यवचनात् श्नलोपो नापि भवति ।

४. 'कृपो रो लः' इत्येव भाष्यसम्मतः सूत्रपाठ इति ऋलृक्सूत्रभाष्याज्ज्ञाप्यते । तत्त्वबोधिनीकारेण स्वामिसम्मतः पाठोऽर्वाचीनपाठः इत्युक्तः (द्र० सि० कौ० भाग ३ पृष्ठ १७६) । ५. 'हन्त्यर्थाः' पाठा० ।

